सोड्ढलविरचिता

# उदयसुन्दरी कथा

# UDAYASUNDARÎKATHÂ

OF

## SODDHALA



WITH INTRODUCTION ETC.

UNDERTAKEN AND PARTLY EDITED BY

C. D. DALAL, M.A.,

AND

CONTINUED AND FINISHED BY

EMBAR KRISHNAMACHARYA,

Adhyaksha, Sanskrt Pâthaśâlâ, VADTAL.



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA GAEKWAD OF BARODA.

CENTRAL LIBRARY
BARODA.
1920.



Published by Janardan Sakharam Kudalkar, M. A., LL. B., Curator of State Librar[y]
Baroda, for the Baroda Government, and Printed by Manilal Itcharam Desai, at
**The Gujarati Printing Press, No. 8, Sassoon Building**
**Circle, Fort, Bombay.**

*Price Rs. 2-4-0*

# भूमिका

अस्य गद्यपद्यभूयिष्ठस्य चम्पूप्रबन्धस्य प्रणेता कविस्सोड्ढलो नाम्ना। जन्म चास्य कायस्थवंशे। कायस्थवंशश्चाधुनाऽप्यनेकधा तत्र तत्र प्ररूढः प्रवर्तते। कविरयमात्मनोऽन्वयस्य मूलपुरुषं, भ्रातरं शिलादित्यस्य, नाम्ना कलादित्यं, श्रीकण्ठपार्श्वपरिचरस्य कायस्थसंज्ञस्य गणविशेषस्यावतारं निरूपयन्नारम्भे स्तौति। विशेषयति च निजवंशं "वालभो नाम कायस्थवंश (पृ.११,प.२८)" इति। यस्मात् वलभीनगर्यामासीदस्य वंशस्य कूटस्थः कलादित्यस्तस्माद्वालभ इति विशेषः। निबन्धारम्भे वंशमात्मनः प्रपञ्चयंस्तथा शिलादित्यकलादित्ययोस्संवादे "देव क्षत्रियादुत्पन्न (पृ.६,प.१२)" इत्यादि कलादित्यवचनमनुवदन् व्यनक्तयात्मनस्संभूतिं क्षत्रियान्ववाये।

अयं च कविनोदाहृतस्स्वान्वयक्रमः। कूटस्थः कलादित्यः। तस्यान्वये समुदभूत् चण्डपतिः (१)-तस्य सूनुः सोल्लपेयः (२) तस्य सूनुस्सूरः (३) तस्य सूनुः कविरसौ सोड्ढलः (४)।

जन्मास्य कवेर्गुर्जरस्य दक्षिणविभागे लाटदेशे। यदयं कविरारम्भ एवमाह, "तस्मिन्नशेषभुवनविख्यातनामनि महावंशे दलितकलिकलङ्कसंहतिरमृतमयाकारकमनीयो नर्मदाप्रवाह इव भूतिलोकमधिष्ठितो लाटदेशमासीदुमेशवंशावतीर्णस्य महात्मनश्चण्डपतेरङ्गजन्मा सोलपेयो नाम"-(पृ. १२. प. ६) ति। तत्रैवानुपदमिदमप्याह "प्रथमतः पुत्रेषु पम्पावतीसूनुस्सोड्ढलो नाम, स खलु स्वर्लोकशोभाविलुण्ठिनं लाटदेशमध्यासित" (पृ. १२. प. ११) इति।

अथ लाटदेशे कस्मिन्नगरे ग्रामे वास्य जन्म? इदं तु न निश्चेतुं शक्यते।

परं जन्मदेश एवास्य नावासोऽभूत्। अपगते कौमारे परिसमाप्ते च विद्याभ्यासे केनापि कालयोगेनायं कोङ्कणदेशे स्थानकं नाम नगरमुपगम्यावस्थित इति विज्ञायते। इदं च कविरेव "कालपरिवर्तितावस्थितिक्रमेण च मृगमदपत्रभङ्गिमयं कोङ्कणभुवो मण्डनमिवोद्यानवनविलीनपरिसरं स्थानकं नाम राजधानीनगरमागत्यावस्थित (पृ. १२. प. १४)" इति वर्णयति। इदं च स्थानकमधुना ठाणेति ख्यायते। कविरयमात्मनो वृत्तं वर्णयन् कोङ्कणदेशाधिपतेश्छित्तराजस्य नागार्जुनस्य मुम्मणिराजस्य तथा लाटदेशाधिपतेर्वत्सराजस्य च समकालिकतामात्मनो ज्ञापयति। तथा चास्य वचनम्—"संवर्गितश्छित्तराजेन संभूषितो नागार्जुनेन संमानितो मुम्मणिनरेश्वरेणेति सोदरेण क्रमोपभुक्तराज्यसंपदा राजत्रयेण प्रतिपाद्यमानः कवीन्द्रसदसि प्रतिष्ठामाससाद" (पृ. १२. प. १७) "अलङ्कारमाणिक्यं चौलुक्यवंशस्य कवीशमीश्वरं लाटदेशश्रियः, कोङ्कणेन्द्रसुहृदमुर्वीपतिं वत्सराजमनुप्रणयपरिणतानन्तसङ्गतिसुखोपभोगार्थमाहूय नीतो जगामे (पृ. १२.प.२६)" ति च। तत्रैते छित्तराजनागार्जुनमुम्मणिनरेश्वरास्त्रयस्सोदराः क्रमादवरजाः क्रमेण कोङ्कणदेशाधिपत्यमन्वभूवन्। एतेषु सर्वतो ज्यायांश्छित्तराजः, अष्टचत्वारिंशदुत्तरनवशततमे (९४८) शकाब्दे (1026 A. D.) नोउर (नोर) ग्रामे भूदानमेकं विधाय दानशासनं ताम्रपत्रे व्यलेखयत्। अयं च लेखः ईण्डियन् एण्टीक्वेरी इत्यस्मिन् (Indian Antiquary, Vol. 5, Page 277) प्रकाशितः। यश्चास्यावरजश्चरमो मुम्मणिमहाराजः, द्व्यशीत्युत्तरनवशततमे शकाब्दे (९८२ 1060 A. D.) अम्बनाथ (अम्बरनाथ) मन्दिरं प्रतिष्ठाप्य शिलायां व्यलेखयत्। अयं च लेखः जर्नल्ड ओफ् बाम्बे ब्रान्च, रोयल

एशियाटिक् सोसाईटी इत्यत्र ( Journal of Bombay Branch, Royal Asiatic Society. Vol. XII, Page 329 ) प्रकाशितः । एवमनयोस्समयनिश्चयेनास्य कवेस्समयश्शकस्य दशमशतके, एकादशे क्रैस्तशतके ( 11th Century ) छित्तराजमुम्मणिराजयोस्समयमभिसंबध्य भवतीति निश्चीयते ।

प्रबन्धस्यास्य प्रणयनसमयस्तु शकस्य द्विसप्तत्युत्तरनवशततमाब्दात् (९७२, 1050 A. D.) प्रायः प्रागेवेति संभाव्यते यदयं कविः "शूर्पारकात् समागतेन" ( पृ. १५६. प. २ ) इत्यादिना वचनसन्दर्भेण जीवत्येव वत्सराजे निबन्धस्यास्य समाप्तिं ज्ञापयति । तेन च वत्सराजेन द्विसप्तत्युत्तरनवशततमे (९७२) कीर्तिशेषेणैव भाव्यमित्यस्ति संभावनास्पदम्, यदस्य चौलुक्यकुलोद्भवस्य लाटदेशाधीश्वरस्य वत्सराजस्य सूनुस्त्रिलोचनपालः प्राप्तराज्यभारो विधाय वार्षिके ग्रामदानं द्विसप्तत्युत्तरनवशततमे शकाब्दे ( ९७२, 1050 A. D. ) दानशासनं व्यलेखयत् । अयश्च लेखः ईण्डियन् एण्टिक्वेरी इत्यत्र ( Indian Antiquary, Vol. XII, Page 196 ) प्रकाशितः, तदस्मिन् दानलेखसमये पित्रा हि वत्सराजेन नामशेषेणैव भाव्यम् ।

एवं शकस्याष्टचत्वारिंशदुत्तरनवशततमाब्दात् (९४८, 1026 A. D.) अनन्तरमेव च प्रबन्धस्यास्य समयेन भाव्यम्, यदयं कविरेतत्प्रबन्धनिर्माणसमनन्तरं कतिपयैरेवाहोभिराहूय सम्मानितस्सभायां मुम्मणिमहाराजेन राज्यश्रियमुद्वहतेति विज्ञायते निबन्धान्ते, तथाह्याह "मित्रैर्धीमद्भिरार्यैश्च बन्धुभिश्चानवरतमापृच्छ्यमानवृत्तान्तो विलोक्यमानप्रबन्धः प्रशस्यमानगुणश्च विश्राम्यन् कियन्त्येव यावदास्ते दिनानि, तावदेकहेलयैव × × × × × मुम्मणिमहाराजस्यान्तिकादाजगाम" ( पृ. १५५. प. १८ ) इत्यादि । अष्टचत्वारिंशदुत्तरनवशततमाब्दे तु (९४८, 1026 A. D.) छित्तराजो राज्यश्रियमवहत्, ततः परमेव नागार्जुनस्ततस्तुमुम्मणिमहाराजः, आह च कविरयमादौ "सोदरेणक्रमोपभुक्तराज्यसंपदा राजत्रयेण प्रतिपद्यमानः ( पृ. १२–प. १८ ) इति, तस्मात् यद्ययं प्रबन्धः अष्टचत्वारिंशदुत्तरनवशततमाब्दे ततः पूर्वं वा विरचितस्स्यात् मुम्मणिमहाराजविरचितं प्रबन्धानुश्रवणं पारितोषिकवितरणं च कथं घटेत, तथासति तदिदं प्रबन्धानुश्रवणं पारितोषिकवितरणं सर्वं छित्तराजे संभाव्येत ।

यत्पुनश्श्रीमता चिमनलाल् दलाल् महाशयेन काव्यमीमांसायां प्रस्तुतम्, उदयसुन्दरीकथानिबन्धस्य समयः प्रायः संवत् १०३० इति तत्तु न नो हृदयपदमधिरोहति ।

यदपि लाइब्रेरी मेसलेनि (Library Missceellany) इत्यत्र "अनन्तपालस्य सं० (१०१६) ताम्रपत्रे नागार्जुनमुम्मणिराजयोर्नामोत्कीर्तनेन कवेस्समयो विक्रमस्यैकादशशतकस्य पूर्वार्धे इति विनिश्चीयते" इति तेनैव महाशयेनोक्तं तदपि शङ्कास्पदमिव, अनन्तपालो ह्ययं नागार्जुनस्य सुनुः, तस्मिन्नेव ताम्रलेखे "श्रीछित्तराजो नृपतिर्बभूव········ततोऽनुजस्समभवन्नागार्जुनः क्ष्मापतिः ······तद्नु तदनुजन्मा मुम्मणिक्षोणिपालः । तस्मिन् नृपे कीर्तिशरीरभाजि नागार्जुनस्य तनयो ·········सोलारगोत्रनृपरत्नमनन्तपालः" इति ह्याविष्कृतम्, शकनृपकालातीतसंवत्सरदशशतेषु षोडशाधिकेष्विति च ( श. १०१६ ) वत्सरगणनाऽपि प्रकाशिता, अयं च ताम्रलेख ईण्डियन् एण्टिकेरि ( Indian Antiquary, Vol. 9, Page 33) इत्यत्र प्रकाशितः । तत् कवेः का-
व्यस्य वा साऽयं समयः ।

स चायं सोड्ढलो बालभाव एव, प्रेयुषि पितरि परलोकं परिरक्षितो मातुलेन गङ्गाधरेण च-न्द्रनाम्नो गुरोर्विद्यामधिगत्य विद्याभ्याससमकालमेव समुन्मिषितया कविताशक्त्याऽन्वहमेधमानः कवीन्द्रसदसि प्रतिष्ठामाससाद । अभूच्च सन्मानपात्रं सिलहरवंशसमुद्भवानां कोङ्कणनरेन्द्राणां छित्तराजप्रभृतीनां सोदराणाम्, अथ कदाचिदाहूतो लाटदेशाधीश्वरं चौलुक्यकुलाभरणं वत्सरा-जमुपजग्मौ । तत्र प्रणयपरिणतानन्तसङ्गतिसुखमन्वभूत् । तस्य च सभायां काव्यगोष्ठीषु विलास-मात्मनः कविताया: प्रकाशयन्नासीत् । अथ कदाचित् प्रसङ्गात् वणिक्पुत्रोपदेशापदेशेनात्मानमु-पलक्षीकृत्य वत्सराजेन पठिताम्, " एकैकशः प्रकीर्णैः·······························कोऽपि प-रिभोगः । " ( पृ. १३. प. ४ ) इतीमामार्यामुपश्रुत्य वत्सराजस्याशयमालक्ष्य प्रावर्तत कर्तुं काव्य-निबन्धमेकम् । कतिपयैरेवाहोभिरखिलसहृदयहृदयाह्लादकं कविकुलावतंसोपलालनीयमाकलितापूर्व-कथासन्दर्भं चंपूप्रबन्धमिमं व्यरचयत् । अथ यान्यासन्नात्मनो मित्राणि, चन्दनाचार्यश्श्वेताम्बर-सूरिः, श्वेताम्बरसूरिरपरश्च विजयसिंहाचार्यः, दिगम्बराचार्यो महाकीर्त्तिः, इन्द्रनामा चापरः, तैरेतैः विलोक्यमानप्रबन्धः प्रशस्यमानगुणश्च विश्राम्यन् कियन्त्येव दिनानि यावदास्ते तावदन्तराल एवा-हूतो मुम्मणिमहाराजेन कोङ्कणाधीश्वरेण श्रावितनिजप्रबन्धस्तेन सन्मानितः परां निर्वृत्तिमवाप ।

मन्ये कवीन्द्रोऽयं शोभते गजेन्द्र इव मदधारया । यदयं कविरात्मनो विभूतिं जन्मतो धनतो विद्यातश्च वर्णयन् स्वकुलकूटस्थं सौराष्ट्रदेशाधीश्वरस्य शिलादित्यस्य भ्रातरं कलादित्यं अष्टमूर्तेः कायानुगतस्य कायस्थनाम्नोऽनुचरगणस्यावतारं वर्णयन् पूज्यपदमधिरोपयति कायस्थवंशम् । विशे-षतः श्लाघते च कुलपुरुषान् । प्रकाशयति चानन्यसामान्यां धनसंपत्तिमात्मनः " विभूत्या च लाटदे-शान्तःपातिविषयाणा ( पृ. प. १५२ ) " मित्यादिना । कल्पयति चैतत्प्रबन्धश्रवणतो बाणस्यापि शापनिवृत्तिम्, बाणकृतमभिनन्दनं च । अथ चान्ते वाल्मीकिप्रभृतिकविरत्नहारे प्रथयति चा-त्मानमतिमनोहरेण वाणीगुणेन ।

कविरयं बाणमनुसरति च्छायया । शब्दमाधुर्यमर्थमाधुर्यमप्यस्य सर्वतो गरीयः । अन्यैवास्यो-त्प्रेक्षणशैली । नूनमस्य कवेर्वाचि मधु क्षरति किञ्चन । अत्रोदाह्रियन्ते कतिचन पद्यानि निदर्श-नतया ।

" अम्भःकणास्त्रशतचर्चितपत्रहस्तसंसक्तपङ्कजमुखी कुमुदोत्सवेषु ।
मुद्रावरुद्धमधुपध्वनितैरिवार्कशोकातुरा सरसि नीरजिनी विरौति ॥ "
" कमलिनी भुवनान्तरिते रवौ व्यपगतालिकलापशिरोरुहा ।
परिदधे विधवेव सुधाकरद्युतिवितानमिषेण सितांशुकम् ॥ "
अन्धत्वमाहितं मन्ये तमसा दीपकेष्वपि ।
अतो हस्तधृताः स्त्रीभिः सञ्चार्यन्ते गृहेष्वमी ॥
चान्द्रं महो मण्डलभाजनस्थं
दुग्धं यथा यामवतीमहिष्याः ।
वियोगिनां हृग्दहनोग्रतापै-
रुल्लासितं व्योमतले लुलोठ ॥

कथायास्सारांशस्तु—आसीत् प्रतिष्ठाननगरे राजा मलयवाहनः । तेन नागलोकाधिपतेः

शिखण्डतिलकस्य तनया कन्यारत्नमुदयसुन्दरी विष्णुनेव रत्नाकरदुहिता लक्ष्मीरुपलब्धेति। संभाव्यते कथेयमुदयसुन्दर्याः कविना समवलोक्य स्वमतिदर्पणे सङ्गृहीतेति।

प्रयुङ्क्ते चायं कविर्विरलप्रयोगानि पदानि कचित्कचित्, यथा "भानुमतेव पद्मः" (पृ. १५४) इति पुलिङ्गपद्मशब्दम्। सौन्दर्यार्थे लडहशब्दं च "लडहलाटीकटाक्षैः" (पृ. ८५) इति। अयं च लटभशब्दस्य विकृतं रूपं देशीयमिति केचित्, परे तु संस्कृत एव गणयन्ति। तथा छटकशब्दं च विप्रुषि, अस्य शब्दस्यास्मिन्नर्थे प्रयोगस्तु न दृष्टपूर्वोऽस्माभिः, देशे तु तत्र तत्र व्यवहृतिपदे छाट, छाण्ट, इत्यस्ति प्रयोगः। प्रायश्छटाशब्दस्य विकृतेनानेन भाव्यम्, शोभते नाम कवीनामेतत्। निरङ्कुशा हि कवयः।

अयं च चम्पूप्रबन्धः परिशील्यमानः पुराऽयं गूर्जरदेशो मधुमयफणितीनां वश्यवचसां बाणभासादिभिस्समरेखामनुविशतां महाकवीनामास्पदमभूदित्यवगमयति। कीर्त्तिशेषेण श्रीमता चिमनलालदलाल (Late Mr. C. D. Dalal, M. A. Librarian, Central Library, Baroda.) महाशयेन पुस्तकमेकमेवास्य शेठवाडीलाल हीराचन्दद्वारेण पाटणनगरस्थपार्श्वनाथपुस्तकालयतः (loan) प्रत्यर्पणं प्रतिश्रुत्य संपादितम्। महताऽपि प्रयत्नेन पुस्तकान्तरं नालभ्यत। एकमेव पुस्तकमिदमादर्शतयाऽवलम्ब्य तेनैव महाशयेन चत्वारिंशत्पत्रपरिमितो निबन्धस्यैकांशो मुद्रणपदं प्रापितः। एतस्मिन्नन्तर एव विधिविपरिणामेन कालस्य वशमापद्यत। अनेन च पण्डितप्रकाण्डेन काव्यमीमांसाप्रभृतयो बहवो निबन्धास्सम्यक् परिशोध्य प्रकाशिताः। अस्य चाल्पीयस्येव वयसि समुत्पन्नं निधनं विशेषतो वटपत्तनराजकीयपुस्तकालयस्य गैर्वाणांशे हानये, अथ काले प्रभवति किमनुशोकेन। अथ तत्राधिकृतैरवशेषपरिशोधनेऽनुयुक्तेन मया यथामति परिशोधितोऽयं निबन्धः। परमेकमेव पुस्तकम्, प्रायस्संवलितमशुद्धेन, मतिश्च नस्सावधिः, स्यान्नाम स्खालित्यम्, क्षन्तुमर्हन्ति पण्डिताः। अथ चादर्शपुस्तके कचित्कचित्पदानि वाक्यानि च भूयो विगलितानि, तेषां चानतिकठिनेऽपि पदे स्वमतितः पूरणं महाकवेर्गभीरहृदयस्यास्य वाङ्मधुनिष्यन्दे दूषणमापादि, तत्र यत्नो विशेषतो न व्यवधायि।

यदि स्याद्गुणलेशोऽत्र तुष्यन्त्येव तु पण्डिताः।
तुष्याम्यहं तु दोषेण ज्ञापितेनेह बोधितः॥

ए. कृष्णमाचार्य.
प्रधानाध्यापक,
संस्कृत पाठशाला वृत्तालय (वडताल)

# INTRODUCTION



**Author's Ancestry**—Soddhala, the author of this composition which is called "Champoo" in Sanskrit, was, as can be seen from the evidence furnished by himself in his autobiographical statements, born in the country called Lâta, the southern part of Gujarat, described by him as the land watered by the river Narmadâ. He belonged to the Kâyastha caste. He traces his descent from Śilâditya's brother Kalâditya, whom he praises as an incarnation of the Gaṇa, called Kâyastha, a follower of God Śiva. By describing Kalâditya as being born in the Kshatriya caste he takes pride in his own descent as a Kshatriya. Thus his lineage in brief is this:—In the Vâlabha branch of the Kâyastha caste, of which Kalâditya was the founder, he was born of Soora, who was the son of Sollapeya, who again was the son of Chandrapati.

**Author's Life and Time**—The internal evidence does not enable us to ascertain the exact place of his birth; still this much is pretty certain that he did not flourish in the place where he was born. He lost his father when he was a mere boy and was brought up by his maternal uncle Gangâdhara. He got his education from a teacher by name Chandra and after finishing his studies, through some coincidence of circumstances, he went to Sthânaka (modern Thânâ), then the capital-city of the kingdom of Konkaṇa. There he flourished at the court of the three royal brothers, Ćchittarâja, Nâgârjuna and Mummuṇirâja, who succeeded one another as kings of Konkaṇa. He ...cribes himself as a contemporary of these three kings, as also of Vatsarâja, ...hâlukya King of Lâta, who also honoured him by inviting him at his court. Ćchittarâja, the eldest brother, who came to the throne of Konkaṇa first, ...aved a metal-plate inscription dated 1026 A. D. (Vide *Indian Antiquary*, ... V. page 277). Mummuṇirâja, the youngest brother, who came to the ...ne last, also engraved a stone-tablet in 1060 A. D. (Vide *Journal of the ...nbay Branch*, *Royal Asiatic Society*, Part XII page 329). As our author ... a contemporary both of Ćchittarâja and Mummuṇirâja, we can infer with ...tainty that he must have flourished in the eleventh century of the ...ristian era.

**Date of Composition**—The present work seems very likely to have ...en composed between 1026 A. D. and 1050 A. D. The author by his words-...रिकात् समागतेन' (p. 156. l. 2)-suggests that the work was finished while ...atsarâja, the King of Lâta country, was alive. This Vatsarâja was very ...obably dead before 1050 A. D., because his son Trilochanapâla made a gift-...eed in 1050 A. D. in which he (Trilochanapâla) designates himself as the ...ing, which he can do only if Vatsarâja was dead. On the other hand it ...ppears that the work was written after 1026 A. D., for he writes that within

a few days after the work was completed, it was read before Mummuṇirâja, who, in appreciation thereof, rewarded him handsomely. This fact, therefore, of the work being read before Mummuṇirâja and of its being appreciated by him enables us to infer that Mummuṇirâja must have been on the throne then and the reward was given by him, not as a brother of the king but as the actual ruler which he became after 1026 A. D.

**Incidents in Author's Life**—Even as a student our author made his genius recognised by other poets. It appears that, while residing in great honour at the court of the kings of Konkaṇa, he was, on one occasion, invited at his court by Vatsarâja, king of Lâta. Our author was fortunate enough to win the admiration as well as the royal patronage of Vatsarâja. This Vatsarâja, once by way of a taunt to the poet, recited a verse professing apparently to give admonition to a merchant in the words 'एकैकशः प्रकीर्णैः......कोऽपि परिभोगः' (p. 13. l. 4). Hearing this and fully grasping the intention of the king, the author at once set about to compose a work and within a few days brought out this charming and unique poetic production.

**Author's Special Merits**—The glowing terms in which he describes his position and powers, his great anxiety to trace his descent from an exalted ancestor of the Kshatriya race born of an immediate follower of God Śiva, the language in which he praises his forefathers, his reference to his own self as an equal to Bâṇa and Vâlmîki–all go to prove that the author is sublimely proud of his merits. And yet his pride is not unbecoming. He is indeed a charming writer and a worthy follower of Bâṇa. In sweetness and and melody of language and beauty of ideas, he is uniquely happy and his creative fancy is peculiarly his own. In him Gujarat can well take the pride of having produced a literary gem of the standard of Bâṇa.

**Ms.-Materials**—The solitary manuscript on which the present edition of this work is based was secured by the late lamented Mr. Chimanlal D. Dalal, M. A., of the Baroda Central Library, through Sheth Vadilal Hirachand, from the Library of the Pârsvanâtha Bhandar of Pâtan in the Baroda State. He tried his best to secure more manuscripts of the work, but could not succeed. At last he based his text on this only available Manuscript and while he was seeing through the press a part of this work, the cruel hand of death snatched him away prematurely. The rest of the task was consequently entrusted to me by the Curator of State Libraries, Baroda, under whose supervision the "Gaekwad's Oriental Series" is edited. I leave it therefore to appreciative readers to judge how far I have been successful in my task, requesting them at the same time to consider that the Manuscript of the text was only one and full of mistakes and several omissions, and that these latter have now been corrected by me from mere conjectures of my mind which is indeed far inferior to that of our great author.





सोड्ढलविरचिता

# उदयसुन्दरी कथा।

विश्वाभिधे महति धामनि मूलहेतुः
  स्तम्भस्त्रिभूमिसुभगे जयति त्रिनेत्रः।
देवी गिरीन्द्रदुहिता घटिता यदङ्ग-
  भागे वरीयसि विराजति शालभञ्जी॥
देवस्य पङ्कजभुवो वदनात्प्रसूता
  वाचाम्पतिर्भगवती जगतीं पुनातु।
या वाङ्मयं सपदि विश्वमुदीक्षयन्ती
  तारेव तिष्ठति मनोनयने कवीनाम्॥
दीपैः किमल्परुचिभिः शशिना जडेन
  किं किं च तेन रविणाऽपि दिनोदितेन।
यत्रैष सूक्तकरदर्शितविश्वसृष्टि-
  रास्ते नवः कविरिति प्रवणो मणीन्द्रः॥
अर्थैरसारमपरिस्फुटवर्णजातं
  ये शब्दमात्र......विपञ्चयन्ति।
स्वेनामुनैव जगति प्रथिता गुणेन
  सत्यं निसर्गतरलाः कवयो वयस्ते॥
ते यान्ति हन्त कवयः.........
  ..........रपरं छिरसनैरनिरस्तदर्पाः।
नीरन्ध्रसंधिघटितैरचलैर्वचोभि-
  र्ये विस्तृतं विरचयन्ति रसप्रबन्धम्॥
राज्ञां सभासु दरिर्ष(श्रे)......णां
  गोष्ठीषु वाखिलसुभाषितभावकानाम्।

सर्वाधिपत्यविषयी स खलु प्रबन्धः
स्याद्यस्य साधुजनचेतसि पट्टबन्धः ॥
दैवे.......देहवतामशेषैः
सम्पिण्ड्य पुण्यपरमाणुभिरेव सृष्टः ।
तेनास्य नूनमनिशं सकलोऽपि काल-
स्तेषां हितानि परिचिन्तयतः प्रयाति ॥
यद्यप्यसौ विशति दुर्जनतन्तुरन्त-
स्सूत्रं सुतीक्ष्णवदलोऽतिदृढस्तथापि ।
शुद्धादलब्धविवरो विनिवर्त्य वक्त्र-
मुत्प्रेरितोऽप्यपसरिष्यति काव्यरत्नात् ॥
लक्ष्मीभुजो भुवि सभापतयः क्व नाम
सन्तीह सम्प्रति गुणेष्वनुरागवन्तः ।
ये हि प्रलीनखलरोलभराः सुखेन
शृण्वन्ति संसदि कवीन्द्रसुभाषितानि ॥
श्रीविक्रमो नृपतिरत्र पतिः सभाना-
मासीत्स कोऽप्यसदृशः कविमित्रनामा ।
यो वार्थमात्रमुदितः कृतिनां गृहेषु
दत्वा चकार करटीन्दुघटान्धकारम् ॥
हाले गते गुणिनि शोकभराद्बभूवु-
रुच्छन्नवाङ्मयजडाः कृतिनस्तथाऽमी ।
यत्तस्य नाम नृपतेरनिशं स्मरन्तो
हेत्यक्षरं प्रथममेव परं विदन्ति ॥
श्रीहर्ष इत्यवनिवर्तिषु पार्थिवेषु
नाम्नैव केवलमजायत वस्तुतस्तु ।
गीर्हर्ष एष निजसंसदि येन राज्ञा
सम्पूजितः कनककोटिशतेन बाणः ॥
सृष्टं तदत्र युवराजनरेश्वरेण
यद्दुष्करं किमपि येन गिरः श्रियश्च ।
प्रत्यायनं स्फुटमकारि निजे कवीन्द्र-

मेकासने समुपवेशयताऽभिनन्दम् ॥

देव्या····[वलधामनि हंसपृष्ठे
लीलायितं चरणयोर्द्वितयेन यस्याः ।
सा किं रमामिषनिषण्णविलोचनेषु
चिह्लाविपेषु ·······दं करोति ॥

योऽप्यस्ति लोकतिलकः क्षितिपेषु कश्चि-
देकः कृती स्वयमसावनुपासितोऽपि ।
निर्मथ्य पत्त्ररथनाथ इव द्विजिह्वान्
क्षिप्त्वामृतं नभसि नेष्यति काव्यकुम्भम् ॥

ये नाम केचिदमुना कवितारसेन
व्यासादयः कृतधियो भुवनेषु सिद्धाः ।
तेषामुपासितपदाः कवयः किमन्य-
दासादयन्ति परमत्र सुवर्णसिद्धिम् ॥

बाणस्य हर्षचरिते निशितामुदीक्ष्य
शक्तिं न केऽत्र कवितास्त्रमदं त्यजन्ति ।
मान्द्यं न कस्य च कवेरिह कालिदास-
वाचां रसेन रसितस्य भवत्यघृष्यम् ॥

मूढेन पश्यत मया नु यशःकृतेऽद्य
क्षोदेष्ववनीश्वरमहो सृजता प्रबन्धम् ।
रत्नं निकामदृढरोहणशैलमग्न-
मुद्धर्तुमेष स मृणालनलो गृहीतः ॥

तदिममतादृग्गुणमपि यः किल भुवनैकबन्धुरमलात्मा ।
सुकृती स खलु कविस्तं संगृह्यतया साधुरादत्ताम् ॥

सा जयति भणितिरहो रसवक्त्रा कुञ्चिकेव या सर्वम् ।
उद्घाटयति कवीनां रसनासारस्वतं कोशम् ॥

पूर्वमिह मर्त्यलोके सकलभूवलयभूषणीभूतभवनमणिकिरणकुण्डल
वलभीतिप्रसिद्धनामरम्यायामसीमगुणभाजि राजधान्यामनन्तनमितसामन्त
स्तकाभरणमणिहंसकोपसेव्यमानचरणशतपत्त्रः प्रथितपृथुकीर्त्तिकल्लोलिनीक
पवलयोपगूढसप्तार्णवो मानविनयनशफरसम्पातमीनध्वजस्तेजसो राशि
सीदवनीश्वरः शिलादित्यो नाम ।

यस्योद्यद्दीप्रवज्ज्रानलसरलशिखाभोगभासि प्रतापे
स्फूर्जत्युच्चैर्न केषां झगिति विगलितो भूभृतां स्तब्धभावः ।
सा नु व्यक्तैव तस्मिन्नसमगुणवती कापि दिव्यौषधीनां
शक्तिर्यन्नो विलीनस्तुहिनदलमयोऽप्येष मन्ये हिमाद्रिः ॥

तस्य च सदैवाङ्गलग्नः पुरःसरः कार्येषु, परिमल इव पारिजातस्य, तरङ्गाभोग इव सागरस्य, किरणकलाप इव दिवसराजस्य, शिखाभर इव कृशानोरेक एवानुजन्मा तीव्रतरवारिधाराजलमार्जितारिनामाक्षरश्रेणिः, आसमुद्रमेदिनीकेलिदुर्ललितविक्रमो, निधानमशेषविषयवर्तिनो ज्ञानस्य, सरस्वतीभवनं, नाम्ना कलादित्य इति पुरुषभूषणं बभूव । यः समन्तादुपान्तनिहितनूतनेन्द्रनीलमणिमयूखवलयमालाभिरलघुलोहशृङ्खलाभिरिवोपसज्जितं निजाग्रजराज्यसिंहासनमनारतं हठादाकृष्यमाणनरेन्द्रसम्पदां बन्दिशालीचकार । स हि महीभृतामुत्तमस्तेनानुजन्मना सह समस्तमनिशं संसारसुखमखण्डितविलासमासेवमानः कदाचिदसहमानोऽन्यतेजस्विषु प्रथममसमसंरंभसञ्चरदपारहरिकरिवरूथिनीरजोभिराक्रम्य दिवसराजस्य मण्डलमुच्चचाल दिशो वशीकर्त्तुम् ।

यस्मिन्नुच्चलिते विजेतुमभितो दिक्चक्रमुच्चक्रम-
क्रामत्कुञ्जरदण्डचण्डचरणन्यासैर्नमन्त्या भुवः ।
मन्ये निर्भरपातमुद्गुरमहाभारेण भग्नस्तदा
तेनैवं चलति प्रकामकुटिलीभूतो भुजङ्गाधिपः ॥

अथ तस्य सुदूरमारूढिमता विक्रमगुणेन विपक्षवंशमवनम्य कोदण्डवत्करप्रणयिनं कुर्वतः क्रमेण क्रमतलानीतनिखिलनरपालचक्रस्य कथञ्चन बलीयसा ससाङ्गसमग्रेणोत्तरापथस्वामिना मान्धातृवंशप्रभवेण भूभृता धर्मपालेन सह विग्रहो दीर्घतामवाप । तां तथा विलोक्य विग्रहस्यायतिमेकस्मिन्नहनि ननु कथमसाध्योऽयमरातिरस्मद्बलानामिति क्रोधतरलितेन चेतसा समरोपकरणसज्जितमारुह्य कुञ्जरप्रवरमुर्वीश्वरः स्वयं गत्वा दुर्गरोधयुद्धान्तिके बभूव । तत्र च प्रचुरयन्त्रोपलाग्नितैलरणमण्डपाद्युपकरणदारुणे प्रसरमागच्छति महारणे, रणरसाविष्टसुभटसङ्घट्टितासिरणितवादित्रेषु प्रवर्त्तमानेषु कबन्धताण्डवेषु, तरत्करिकरङ्कनौकासु प्रसरन्तीषु शोणितनदीषु, दीप्यमानजिगीषुनरपालकोपानलेषु विजृम्भमाणेषु च भ्रमद्गृध्रपक्षप्रभञ्जनेषु, सहसैव दुर्गादागत्य सिन्धुरगतस्य राज्ञश्चरणयोरग्रे पपात परमेको विविधवर्णरमणीयकायः सायकः । दृष्ट्वा च निकटमधिरूढो भ्राता कलादित्यः स्वामिन्नाश्चर्यमक्षरश्रेणीसनाथः

किमप्यसौ शर इति गृहीत्वा राज्ञोऽनुमत्या मनसि तान्यक्षराणि स्फु कृत्य नन्वार्यायुगलमेतदिति प्रकाशं वाचयामास ।

कर्णे निवेशितपदः प्रहितो विद्वेषिणः प्रविश्याङ्के ।
कोऽपि पतत्रिप्रवरः कार्यं विदधाति विजिगीषोः ॥

अपि च ।

पूर्वापरयोः शुद्धिं विमुच्य कुटिलक्रमेण विचरन्तः ।
जयमिच्छन्ति नियुक्ताः सर्वे विशिखा रिपोरेव ॥

राजा त्वीदृशमिदमार्यायुगलमाकर्ण्य मनस्येव भावितार्थो झगित्याक्रु दुर्गमूलाद्दलानि संवृताखिलसमीकसंरम्भो निवर्त्य निजसेनानिवासमाज गाम । तस्मिन्नुचितक्रमेण करणीयमह्नो निवर्त्य रजन्यामाहूय रहस्यकालमुक्त समरसम्भारोह्यमानामितवितर्कं भ्रातरमुवाच । ननु वत्सेन शरस्थमायात वधारितमिदमार्ययोर्युगलम् । अत्र हि शरप्रणुतिनिन्दाच्छलच्छन्नो नूनमन्य ऽयमर्थात्मा । तथा च जानाति वत्सो यत्किल ममाऽस्ति धन्विनामग्रणीरस् जन्मा गुणाढ्य इत्याप्तः सेवकः । स खलु मयात्र द्विषदन्तिके पूर्वमेव प्रणिधि रूपेण निरूपितो वर्तते । तेनाद्य श्लेषोक्तिचतुरेणैतदार्यया प्रथमया कर्णे नि शितपदः पतत्रिप्रवर इति पदद्वयेन कर्णे संसिद्धप्रहितिः प्रणिधिः पतत्रिभि प्रवरो धन्वी किलाऽहमिति प्रत्यभिज्ञाप्य परिपन्थिनोऽङ्के प्रविश्य कार्यकारि त्वमात्मनो ज्ञापितम् । द्वितीयया च निवेद्य प्रहितं यत्खलु ये हि कर्म नियुक्ताः विशिखा इति विगतशिखाः मूढजातयस्ते सर्वेऽप्युज्झितपूर्वापरक्रम वक्रभावेण विचरन्तः शत्रुमेव जयन्तमिच्छन्तीति वाच्यार्थे निश्चितमनेन नी तिनिपुणेन रिपुणा कथञ्चन प्रभेदिताः सर्वेऽप्यस्माकममी करितुरगकोशादिष्व धिकारिणः । एवं च यद्यथैव किमप्युपक्रम्यते तत् तथैव तैरेवमकर्मभिराख्याय मानमभितः प्रतिसमाधत्ते सावधानो रिपुः । इत्थमसावायाति विग्रहो वृद्धिं, त दद्य रात्रावेव प्रतिगृहं सञ्चारितचरत्वेन जानीहि किन्नाम सत्यमेतदित्यमन्दमा दिष्टेन तेन यथानिरूपितमशेषतश्चक्रे । प्रातरागत्य च देव ! यथा गुणाढ्येनाऽऽ ख्यातं व्याख्यातं च देवेन तथैव तत्सर्वमित्युक्ते निकामकुपितो नृपेन्द्र सपदि सञ्चरत्कोपलक्ष्मीपदक्षेपलग्नेन यावकरसेनेव लाञ्छितां लोहितां दृश मादधानः क्रोधिन्यां दृशि स्थितेन च कृतान्तेन वलितोदञ्चितामसमश्मश्रुदं ष्ट्रिकामिव भ्रुकुटिमाभोगभीषणां घटयन्नुद्भटेन पथा वक्तुमारेभे । भवतु वत्स

किमेभिरहितप्रभेदविघटितैरसाधुभिः सहायैरेष चेज्जलैरभेदितोऽस्ति मदीयो बाहुरवश्यं मन्दरमहीध्र इव लक्ष्मीं पयोधिमध्यमग्नामप्युद्धरिष्यति।

तथाहि—

श्रीः स्वयं चापटङ्कारस्वनव्याहारधाविता।
सेनेवागत्य धीराणां दोर्दण्डमधिरोहति॥

अपि च—

लक्ष्मीपारावत्या वसतिकृते पाणिपञ्जरप्रवरः।
विहितः स एव विधिना सुभटानामिह भुजस्तम्भः॥

तदेष चिराद्भवतु मे संप्रति कृपाणप्रणयी पाणिरित्यसिदण्डमादातुकामं राजानमालोक्य कलादित्यः सादरमवादीत्। ननु जगत्त्रयाक्रमणकर्मठोरुविक्रमः किमित्येवमेतावत्यणीयसि रिपावार्यः स्वयमेनं कृपाणमादत्ते। किं नाम विस्मृतः स्वामी?। देव! क्षत्रियादुत्पन्नः स्नेहेनोपलालितः पालितश्च कोशेन मध्यगतो मुष्टेरनिष्टनरनिग्रहोपकरणमहं ते मण्डलाग्रः। तदादिश क्षणादवश्यमद्यैव त्वदीयेन तेजसा दलितदर्पान्धतमसं धर्मपालमवनौ विनतिलुलितकायं त्वच्चरणतलवर्तिनो लक्ष्मरेखामयस्य चक्रस्याक्षदण्डं करोमीति सानुबन्धमभिधाय बलादनिच्छतोऽप्यग्रजस्य गृहीतभण्डनारम्भपरिकरः स्वीकृत्य सकलमलिकुटुम्बडम्बरितगण्डफलकमुड्डामरं मत्तकरिवरूथिनीवृन्दमुदग्रवेगं स्वीयं सैन्यमनिन्द्यं च सामन्तचक्रमेकहेलयेव विश्वमास्फालिताजितूर्यनिर्घोषनिर्भरं कुर्वन् प्रणम्याग्रजं निर्जगाम। झगिति चाग्रे स्वयमवष्टभ्य सुभटसन्दोहदुर्गमं दुर्गमकरोदनन्तनरहरिकरीन्द्रसंहारदारुणं महारणम्। तथाहि—

निर्लूनं सुभटस्य कङ्कणमणिश्रेणीशिखाडम्बरो—
दीप्रप्रान्तमुदस्य दस्युपतगत्रासेन गृध्रो भुजम्।
यस्मिन्नस्तमुपागतैर्नृपतिभिस्तत्कालमूर्ध्वं जग-
द्गच्छद्भिः सह दीपवर्त्तक इव व्योमान्धकारे ययौ॥

किं बहुना।

तामासाद्य मुदूरमस्त्रपतनप्रक्षुण्णवीरत्रुट—
त्तूर्यद्वारकपालजङ्गलचयच्छन्नामनीकक्षितिम्।
जातं गृध्रगणोज्झितं द्रुमकुलं भल्लूकशून्यं वनं
निष्कापालिकमम्बिकागृहमपप्रेतं च लङ्कापुरम्॥

तथाविधे च व्यतिकरे तत्तादृशमचिन्त्यमप्रतिविधेयमपूर्वमिव दुर्गग्रहो क्रमस्वरूपमुपलभ्य बलवता विगृहीतस्य तदनुप्रवेशकारित्वमपि नीत निर्णीतमस्तीति नयविचक्षणः क्षणेनैव सर्वार्प्पणपुरःसरो धर्मपालः प्रतिपद्य वामुपनतो बभूव। कलादित्यस्तु तं समर्पितोपचारसर्वस्वमेकाग्रमग्रे विधा दुर्धरासिपत्रव्यापारणपरिश्रमार्णसा मिलितैः समरपांसुभिः कर्दमिलेन वपुष पातालपङ्कादुत्थितो महावराह इव समुद्धृत्य मेदिनीमागतो द्वार एव भूपृष्ठसङ्घ टितकिरीटकोटिना मस्तकेन कृतप्रणामः सरभसमाहूय समालिङ्गितोऽग्रजे सविनयमुपाविशत्। धर्मपालोऽपि देव! स एष धर्मपालः प्रणमतीति वि ज्ञाप्यमानः प्रतीहारेण चरणयोः पपात। प्रणामविनते च तस्मिन्नुपकण्ठवर्त्ती सुललितो नाम प्रधानो बन्दिनामुचितमवसरे पपाठ।

देव! त्वत्पदपीठमेचकमणिश्यामांशुमालामयं
ये सन्नाहमलङ्घ्यलोहघटितं गृह्णन्ति नत्वा नराः।
तेषामत्र खलु क्षितीन्द्रतिलक! त्रैलोक्यचूडामणे!
स्वामिन्न प्रभवत्यसौ विजयिनी कालस्य दण्डाहतिः॥

अथ पार्थिवप्रवरस्तेन तस्य स्तुतिपदाविष्कृतकृपार्थनावाक्येन सुदूरमार्द्री कृतस्वान्तः सपदि सन्दर्शितानल्पप्रसादमुत्खातप्रतिरोपणेन पुनस्तं तत्रै स्वराज्ये निवेश्य प्रसाधिताशेषदिक्चक्रवालोपार्जितां जयश्रियमादाय निजा माजगाम राजधानीम्। आगतश्च तत्र क्रमेण निवर्त्तितासु सर्वतः सर्वे दिग्विजयसिद्धिसंवर्धिताडम्बरवतीषु महोत्सवप्रक्रियासु, प्रकामशुक्लैः पलितै रिव यशोभिः शोभितयाऽतिवृद्धया राज्यश्रियाऽधिष्ठिते प्रतिष्ठिते साम्राज्य शालिनि सिंहासने, समन्तादुच्छन्नच्छत्रतया प्रकटीभवन्तमेकस्वामिनि जगति द्युमण्डलस्वामिनं तिरोधातुमिव प्रसारिते सकलभुवनावरणविस्तारवत्येकात पत्रे, प्रतिदिवसमुल्लुण्ठितारितरुणीनेत्रनिर्मुक्तैरञ्जनमलीमसैरश्रुभिर्लिप्तं क्षाल यितुमिवात्मानमम्भोधिमनुप्राप्ते प्रतापे, विलसति कक्षीकृताशेषभूवलयभारा दिव राजचक्रेण शिरोधिरुह्यमानवशासने, निर्व्यूढतीव्रवीरव्रतः कदाचिद्वस निशायाः शयनसद्मन्यसमकोमलतल्पमध्यासितो दुरधिगम्यमग्रेतनं कृत्यजा तमासूत्रयन्निराकुलयितुं चित्तमदत्तावकाशः प्रेयसीप्रवेशस्याप्येकाकी सम्भ्रमे चिन्तयितुमारेभे। नन्विदमनेन चतुरम्भोधिरोधोवरुद्धविश्वम्भराभोगेन प्रभूत थागतेन सम्पदां वृन्देन द्वारप्रविष्टेन च भूपालमण्डलीपरिग्रहेण परमं विस्तार

मायया राज्यम् । राज्यं हि न नाम निरमात्यमसूत्रधारं नाटकमिव पार्यते प्रवर्तयितुं यस्मादमात्यमुख्यः सकलोऽपि कलापः कार्याणाम् । स चास्माकममात्यः कनकायनो नाम निकाममीश्वरो मानितोऽपि कथञ्चन सार्द्धमधिकारनिरूपितैः स्वजातिभिरवसरे व्यभिचारमुपदर्शयामास । तदिह संप्रति कः किल वर्णचतुष्टयाद्विशुद्धश्चतसृभिरुपधाभिरुचितोऽधिकारेषु । द्विजन्मानो हि ब्रह्मतेजसो वन्दनीयाः पूज्या एव मन्त्रिपुरोहितपदे स्थापयितुमुचिता भवन्ति, नार्थचिन्ताधिकारेणात्मनः प्रहीयन्ते । तैजसीं वृत्तिमपहाय पाशुपाल्यकृषिवाणिज्योपजीविनां च विशां हीनतया हृदयवृत्तेरिहावकाशोऽपि न श्रेयान् । शूद्रास्तु समयदर्शितेनामुना व्यभिचारेण च निवेदिता न तावदर्हन्ति । अतः को नूनमवेक्षणीयगुणक्षेत्रं क्षत्रियादपरः सम्प्राप्यते । स तु स्वधर्माधीनपुरुषव्रतः सहजस्य तेजसः पात्रं, न खलु मनुष्यजन्मना मादृशेनान्यत्र कर्मणि पार्यते प्रवर्त्तयितुम् । को नाम भगवन्तमम्बरतलावगामिनं मरीचिमालिनमवनिपथेन प्रचारयितुमलं, कस्यास्ति शक्तिरूर्द्ध्वमुल्लासिनमनलशिखाकलापमधोमुखं प्रवर्त्तयितुं, केन च शक्यते तडिद्दण्डस्य विस्फुरणलाघवं मन्दतां नेतुम् । अथास्ति श्रूयते च क्षत्रियाणां प्रवृत्तिरधिकारेषु । यदा हि पितृवधामर्षरोषितो भार्गवः समग्रमेव राजन्यकमकुण्ठतरसारधारोपदर्शितानलसमुच्छलद्विस्फुलिङ्गदलभासुरेण परशुना सर्वतस्त्रुटितकण्ठपीठीकमारब्धवान् कर्त्तुं तदा तेन कियताऽपि क्षत्रियजनेन कियत्कालमात्मनो रक्षार्थं क्षात्रमपहाय पन्थानं वृत्तिरियमादृता नियोगस्य । यद्यप्येवं तथाऽपि चान्यपार्थिवकुलपुत्रको न क्वचित्कश्चिदात्मनः श्रियमधिप्रवेशयितुं विश्रम्भविषयीकृतो भीत्या । तथा च दिनेन्दुरादित्यस्य धामन्यन्तरनुप्रविष्टो झटित्यवसरमवाप्य मिलितया रजनिसामग्र्या तमपि प्रतापवन्तमिनं समुच्छेद्य स्वयमशेषं भुवनमाक्रान्तवान् । अस्मत्कुले तु न कश्चित्तथाविधो बुद्धिमानस्ति यः किल संवर्गयन्नशेषतः स्वामिनो बन्धून् गोत्रभिदो मन्त्रिणं धिषणमपि दुर्बुद्धिं मन्यते, नन्दयन्ननेकशः कोविदकुलानि विबुधविद्विषामनुगतं शुक्रमपि मूर्खं गणयति, मिलत्कोटिशोरथवरूथिनीदशरथमेव स्वामिनं कुर्वाणं वसिष्ठमप्यल्पधियं कल्पयति, जगतोऽपि बन्धुतया व्यवहरन् विश्वामित्रं रामस्याप्यमात्यमसत्पक्षे कलयति, येन तस्मिन्नसमलक्ष्मीविकासविस्फुरितकीर्त्तिबले राज्यभारमारोप्य निराकुलो विलासदर्शितानि सुखान्यनुशीलयाम्येवं च किमिह संप्र-

त्युचितानुष्ठानमूढोऽहमाचरामि । कलादित्योऽपि निजबुद्धीनामसाध्ये कार्य-वस्तुनि किमेव किल मन्त्रयिष्यति । यतः—

उपायस्योल्लेखं कमपि न यदा पश्यति नर-
स्तदानीं किन्नाम स्फुरति मतिपुञ्जेऽपि कुरुते ।
सहस्रं पादानामपि रथमनालम्बपथगं
विना व्योमन्यर्कश्चलतु यदि शक्नोति चलितुम् ॥

अथवा किमनेन प्रयोजनविनिश्चयाक्षमेण मुधैवमालोचविस्तरेण क्लेशया-म्यात्मानम् । येन देवताविशेषेण ममैतद्राज्यमागतमेतावतीं वृद्धिं पालकोऽपि तस्य तेनैव कश्चन विधिनिर्मितो व्यक्तिमवश्यमेष्यतीति मनसा संप्रधारय-न्नेव निद्रां जगाम । अथ तथा निद्रोपभोगसुखमनुभवतः क्षितीन्द्रस्य परि-गलति यामत्रये रजन्यास्तस्य शयनगृहस्यान्तरेकहेलयैव झगिति मणिनूपुरप्र-स्तुतः सुन्दरो ध्वनिरुदभूत् । तेन च ध्वनिना झटित्यसावुड्डीननिद्रो विमुद्रयति चक्षुषी यावत् तावदग्रे झगित्यमृतानुहारिणा दर्शनेनाऽऽप्यायितविलोचनां कान्तिबहलैरवयवैरेकभूतात्मकशिवतेजोमयं गात्रमुद्वहन्तीं निर्मलस्य लाव-ण्यवारिणस्तरता तरङ्गवलयेनेव स्वच्छांशुकेन जनितमतिमनोहरं नेपथ्यमा-दधानामविरलकुरलोपशोभिना भालेन तिमिरमूलोदितेन खण्डेन्दुना भास-मानामधिदेवतामिव निशायाः कर्णयोर्भूषणमयेन विलासतामरसकर्णिकाद्वयेन सेव्यमानां सगोत्रामिव पाथसां साम्येन मुक्ताभरणस्य दायादामुदधिवेलायाः सादृश्येन वदनस्य सोदरामिन्दोरास्पदतया कान्तेः सजातिं रत्नजातस्य कनक-नूपुरयुगादधः प्रसर्पता द्युतिभरेण पिञ्जरितचरणां कपिशकिञ्जल्कपांसुलेन सरो-जवनाध्वनेवागतां गौरतरेणाङ्गलावण्येन चन्द्रिकाभूतिधवले चन्द्रमसीव सुधा-समुत्थितां मधुरया मूर्त्या दुग्धसिन्धाविव निष्पन्नामसामान्यदर्शनामचिन्त्य-रूपवतीं योषितं ददर्श । सविस्मयातिरेकमालोक्य च तामपि येनाऽहमुद्बुद्धः स नूनमस्याश्चरणसञ्चारजन्मा नूपुरध्वनिः । भवतु पृच्छामि का पुनरसौ । न ताव-दहमनेन प्रसरता निरन्तरमेतदङ्गस्य तेजसा निरस्यमानदृष्टिः स्पृष्टभूतलेयम-स्पृष्टभूतला वेति निर्णेतुं पारयामि । यदि वा द्वारपालाङ्ग्यामिकैरज्ञापितानामनु-द्घाटितकवाटसंपुटे शयनसद्मनि प्रवेशोऽत्र मनुजसीमन्तिनीनां, न चामर्त्य-जनोचितेनामुना कान्तिकलापेन मानुषीयमवश्यं दिव्यैव काचित् । दिव्य-जनो हि सामान्योऽपि मान्यो मनुष्याणां किं पुनरविकारवता दृशोर्विभ्रमे-णापनीतचापलं महनीयमिव दधाना स्वरूपमसावीदृशीति निश्चित्य चेतसि

ससंभ्रमं चोत्थाय तल्पतलात् समयसमुचितोपजनितेन प्रश्रयेण दर्शितादरस्तामवादीत् । कथय पुण्यदर्शने ! का नाम भवती, कुतः, किमर्थमज्ञातस्त्रीजनविरुद्धमेकपुरुषाध्यासितमेतदागताऽसि रहःस्थानमिति प्रोक्ता नृपेण सा प्रतोषशालिना स्मितेन सुधाशीतलेन चक्षुषा चाल्हादयन्ती प्रत्युवाच । भोः श्रीमतामीश ! जानासि यामिह वशीकर्तुममी समन्ताद्राजानः प्रसरदसमाशुपाटितानल्पनरकरितुरङ्गमाश्च कुङ्कुमविपञ्चितं विद्याचक्रमिव समरमासूत्रयन्ति, यस्य कृते ब्रह्माण्डविवरसञ्चारी वीरलोकः कल्पमिव दर्शितफलं कृपाणमावहति, या खलु निकामवत्सलतया पशुजात्यापि कामधेन्वा स्तनान्तर्निवेश्य परिपालिता, विचेतनेनापि कल्पद्रुमेण स्कन्धमधिरोप्य संवाहिता, दृषदापि चिन्तामणिना हृदये विन्यस्य धृता, किं बहुना, यया विरहितेयमित्थं प्रसरमागतापि त्रिलोकीलता मुहूर्त्तेनैव शोकमायाति, साऽहं सलिलसोदरा महोदधेरात्मजा लक्ष्मीः प्रसाधिताशेषदिङ्मुखस्य वशीभूता तवैव मण्डलाग्रे वसामि । त्वया च राज्यचिन्तकमपश्यता निवेशितेण देवतासु चिन्ताभरेणाद्य सूचिता विभावयन्तीव प्रयोजनमात्मनोऽपि सपदि प्रत्यक्षीभूय प्रस्तुतोपदेशदानार्थमागता । तदेतदुच्यसे भूपालतिलक ! मत्पालनाय किमित्यन्यमन्यत्र पुरुषपुङ्गवं गवेषयसि । श्रूयताम् । यदा किल सकलोऽपि सशेषमन्दरोपकरणः स्वर्गौकसां जनः सिन्धुनाथमथनव्यापारमारभत तदाऽहं शशधरसुरभिकौस्तुभादिवस्तून्मेषक्रमेण निर्गत्य झगिति दृङ्मार्गमागताऽपि कथञ्चिन्मन्दरपरिभ्रमोद्भूतदुस्तरावर्तसन्निवेशेन पुनरतिगभीरे पयसि पाथोनिधेरमज्जम् । विघटिताध्यवसायविधुरेण च विषण्णेन सर्वतोऽपि शतमखप्रमुखेण विबुधवर्गेण मदर्थमविलम्बसहमुपायमापृष्टो बृहस्पतिरुवाच । नियतमेकोऽस्ति श्रूयतामुपायः । प्रायशो विदित एव भवतामतिप्रसिद्धः कायस्थो नाम गणः श्रीकण्ठसन्निधावास्ते । स चाष्टमूर्तेर्भगवतो जलमयीं मूर्तिमधिष्ठितस्यासन्नसहचरत्वेन काये स्थितत्वात्कायस्थ इति जलैरनाहतशक्तेः प्रणयास्पदमम्बुधेरासीत् । एवं च तेन कृत्वा निकामविषमार्णवोदरकुटीरकोणं गताऽप्यसौ हठादानीयत इत्यमरमन्त्रिणा प्रोक्ते त्वरितमाहूय प्रवर्तितः सोऽत्यर्थमर्थनया सुरसमूहस्य झटिति तत्रान्तर्दत्तझम्पो मां मन्दरपरिक्षोभितैः पयोभिरितस्ततोऽन्तर्भ्राम्यमाणामादाय निर्जगाम समर्पयामास च दिवौकसाम् । इदानीं तु त्रिदशलोकोपरुद्धस्य भगवतो भवस्यादेशादुर्वीपतिराज्यवर्त्तिनीं मामनुपालयितुमवतीर्णो मर्त्यलोकं, स्थास्यति च वंशावतारं यावदत्रैव । स खल्वेष तस्यावतारस्तावको भ्राता कलादित्यस्तदङ्ग !

मदीयमिदं वचः प्रमाणीकृत्य समर्पय सर्वाधिकारस्वामिनीं प्रातरमात्यमुद्रामेतस्य, येनाहमनेन परिपालिता निरपायमाप्यायनसुखान्यनुभवामीत्यभिधाय धृत्वा करपल्लवेन सा चैषा मदङ्गरक्षाकृते मुररिपुप्रहिता स्वयमुपरिकेण गरुडेनाधिष्ठिता सुवृत्तशालिनी सुवर्णसंभूतिर्महत्तरा मुद्रा, ग्रहीष्यति च भवानुभावादपगतान्यभावापग्रहः कलादित्य इति राज्ञः करे मुद्रां समर्प्य झगित्येव शय्यासन्नवर्त्तिनि कृपाणे तदेव निजं मर्त्यजनविलोचनागोचरं स्वरूपमाधाय विशश्राम । राजा तु मुद्रालाभसुभगेन तेन व्यतिकरेण सरभसमुल्लसितमानसस्तमल्पशेषमपि कल्पप्रमाणं मन्यमानोऽखलं रात्रेः कथंकथमपि जाग्रदेव बन्दिनां वर्णावलीवचोभिराख्यायमानमासाद्य प्रभातमुत्थितो निर्वर्त्य निखिलमवसरोचितं क्रियाकलापमारात्रिकादिमङ्गलोपचारशालिनि विशालमणिवेदिकाचतुष्के विरचितास्थानमुपविष्टः। पुरो निविष्टेषु प्रणयिलोकेषु कुवलयदलायतेन चक्षुषा संभाव्य सन्निहितमासीनं पुण्डरीकनामानमसामान्यगौरवं पुरोधसमशेषतोऽपि तं शर्वरीवृत्तान्तं कर्ण एव निभृतमावेदयाञ्चक्रे, दर्शयामास च तां कल्याणमयीं मुद्राम् । अथ प्रतुष्टेन पुरोधसा श्रवणादेव महाराज ! नियतमवितथान्येव देवतावचांसि । पश्य शुभसूचकमिदमेव मङ्गलवतां कर्मणामुपस्थितं मुहूर्त्तम् । अत्र हि कमलया प्रदत्तो विना विलम्बमादेशः क्रियत इति प्रोक्ते राजा त्वरितमाहूय बहुमतेन प्रेमोपचारबन्धुना वचोनिर्बन्धेन प्रबोध्य सञ्जीकृतमनल्पसमुचितेन प्रक्रियाक्रमेण मुद्रामर्पयित्वा तं निष्कण्टकीभूतसकलभूवलयनिराकुलतया विरतविक्रमव्यापारमात्मनो भ्रातरं कलादित्यममात्यपदे निरूपयामास । अनन्तरमसौ कायस्थनाम्नो महेश्वरगणस्यावतारः क्षत्रियविभूषणं कलादित्यस्तेन भवस्य भगवतोऽनुभावेन तामेव निजाग्रजराज्यलक्ष्मीपालनपरामधिकारपदवीमादृत्य व्यापारितस्वान्तः सन्तत्या प्रसरमाससाद। पूरितावधिश्च तमात्मनो गणमयं स्वरूपमासाद्य स्वामिनो हरस्य चरणान्तिकमगच्छत् । तस्मात्कालपरिवृत्तिपरम्परोत्पद्यमानानन्तपुरुषपरिपाटिक्रमेण प्रकामतुङ्गः शाखाभिर्विस्तृतो वर्द्धितच्छायः क्ष्माभृतां कटकेषु स्वाङ्गभुवा धर्मेण विजयहेतुः क्षत्रियाणां, वृद्ध्यर्थमालम्बनं राजलक्ष्मीलतायाः, भ्रमतः समन्तादाधारदण्डो वृद्धस्य यशसः, काश्यपीसीमन्तभूषणमभूद्वलभीविनिर्गत इति वालभो नाम कायस्थानां वंशः ॥

वंशस्य सच्चरितसारवतः किमङ्ग ! सङ्गीयते सुललिताकुटिलस्य तस्य ।

येनान्तराधृतभरेण धराधिपत्ये राज्ञां जयत्यहृतविस्तरमातपत्रम् ॥

किं बहुना। तृतीयमकृतोन्मेषं कायस्थ इति लोचनम्।
राजवर्गो वहन्नेष भवेदत्र महेश्वरः ॥

तस्मिन्नशेषभुवनविख्यातनामनि महावंशे दलितकलिकलङ्कसंहतिरमृतमयाकारकमनीयो नर्मदाप्रवाह इव भूतिलकमधिष्ठितो लाटदेशमासीदुमेशवंशावतीर्णस्य महात्मनश्चण्डपतेरङ्गजन्मा सोल्लपेयो नाम। तस्य च बहूनामन्यतमः सुतानामीश्वरविभूषणं शशीव ग्रहाणामनन्तमुखोदञ्चितप्रघोषः पाञ्चजन्य इव शङ्खानां सुमनसामभीष्टः पारिजात इव तरूणामसीमवता गुणग्रामेण निरुद्धनिखिलमेदिनीविभागः सुवृत्ततया तिलको गोत्रस्य सुगृहीतनामा सूर इति सूनुर्बभूव। तस्मादमलमुक्तावदातकीर्त्तिः पुरुषपुङ्गवादजायत प्रथमः पुत्रेषु पम्पावतीसूनुः सोड्ढलो नाम। स खलु स्वर्लोकशोभाविलुण्ठिनं लाटदेशमध्यासितो विद्याभ्याससमकालमुन्मेषमागते कविपथोपदर्शिनि सारस्वते ज्योतिषि निसर्गसुस्थितस्तेनैव कवितारसेन मानसमनुशीलयामास। कालपरिवर्त्तितावस्थितिक्रमेण च मृगमदपत्रभङ्गिमयं कोङ्कणभुवो मण्डनमिवोद्यानवनविनीलपरिसरं स्थानकं नाम राजधानीनगरमागत्यावस्थितः कोङ्कणमहीभुजो जाह्नवीयमुनयोरिव सरस्वतीश्रियोर्वेणीसङ्गमेन संवर्गितः छित्तराजेन संभूषितो नागार्जुनेन संमानितो मुम्मुणिनरेश्वरेणेति सोदरेण क्रमोपभुक्तराज्यसंपदा राजत्रयेण प्रतिपद्यमानः कवीन्द्रसदसि प्रतिष्ठामाससाद। अथ कदाचिदसावुदयगिरिशिखरयन्त्रोल्लालितविमुक्ते तिमिरकरिघटाघातिनि गण्डोपलगोल इवाम्बरमनुसरति भगवतस्तीव्रत्विषो मण्डले चण्डकरकिरणकुञ्चिकोद्घाट्यमानेष्विव विघटितदलकवाटसम्पुटेषु व्यक्तीभवत्सु तामरसकोशेषु दिवसलुण्टाकोल्लुण्ठितश्रियः कुवलयवनादाक्रन्दमुखरासु प्रभास्विव समीपमम्बुजग्राममनुप्रधावतीषु गुञ्जतामिन्दिन्दिराणां श्रेणिषु प्रदोषपवनपटपल्लवापमार्ज्यमाणेष्विव निर्मलीभूतेषु ककुभां मुखेषु वासरविधेयकर्मणि क्रमशः प्रवृत्तेषु जनपदेषु जाते च लोचनावकाशदायिनि प्रभातसमये सभामधिष्ठितं कीर्त्तिचन्द्रिकाविस्तारसितपक्षमनाकृष्टचापकन्दर्पमलङ्कारमाणिक्यं चौलुक्यवंशस्य कवीशमीश्वरं लाटदेशश्रियः कोङ्कणेन्द्रसुहृदमुर्वीपतिं वत्सराजमनु प्रणयपरिणतानन्तसङ्गतिसुखोपभोगार्थमाहूय नीतो जगाम। तत्र च प्रवर्त्तमानासु चतुरकविकदम्बकोदञ्च्यमानानेकरसविपञ्चनपटीयसीषु

स्वैरगोष्ठीविभूतिष्वन्तर एव रत्नविक्रयवता वणिक्पुत्रेणाऽऽनीय दर्शितं मुक्ताफलप्रकरमालोक्य सहसैव मणितत्त्वविदां नरेन्द्रः प्रस्तुतार्थदलशालिनी-मार्यां पपाठ ।

एकैकशः प्रकीर्णैर्मुक्तामणिभिः किमेभिरेभिस्तु ।
यं सृजसि हन्त हारं तस्यान्यः कोऽपि परिभोगः ॥

श्रुत्वा च तयाऽऽर्यया झगित्यैवासौ वासितात्मा कविश्चिन्तयामास मौनम-वतिष्ठमानो मुहूर्त्तमुचितक्रमेण च विसर्जितो भूभुजा मन्दिरमाजगाम विक-ल्पयामास च । ननु विविधवैदग्ध्यवता पार्थिवेनेत्थमनया स्वाभिप्रायक-ल्पितयार्यया केवलानि विफलानि मुक्ताफलानीति तैरेव सूत्रिताभोगवतो हारस्य गौरवमारोपयन्त्या वणिक्पुत्रोपदेशव्याजेन सम्यगुपदिष्टमिह ममैव जाने । यतः—

मुक्तकवृत्तैः कविता कैव किलाऽसौ विना प्रबन्धेन ।
ताराभिर्न विराजति शून्या चन्द्रेण गगनश्रीः ॥

तत्साधु संवृत्तमनेन वत्सराजपठितार्यावधारणेन मे योगाञ्जनेनेव मोहति-मिरावृतेयमुद्घाटिता मानसी दृष्टिः शब्देनेव निद्रान्तः प्रबोधिता बुद्धिरुदकपा-तेनेव मूर्च्छितश्चेतनां लम्भितो विवेकश्च । ततश्च किमहमित्थमनेननैकप्रकीर्णवृत्त-कवितामात्रकेण कृतार्थः प्रमादी तिष्ठामि । करोमि स्वशक्तिविस्तरपरीक्षणं विना कुतूहलेन भूरिणा च कीर्त्तेरभिलाषेण साद्भुतापूर्वसंविधानकमनेकरसानुबन्धपरं प्रबन्धम्। प्रक्रमे तु रमणीयं न नाम केवलं गद्यं नापि केवलं पद्यमुभयानुबन्धिनी चम्पूरेव श्रेयसी, यस्मादन्यैव रत्नैर्विपञ्चितस्य शोभा कनकभूषणस्य, अन्यदेव पाटलामिश्रितस्य सौरभं विचकिलगुलुञ्छस्य, अन्य एव वंशध्वनिगर्भितस्य मनोहारिमा गीतस्य, अन्यदेव कर्पूरमिलितस्य शैत्यं मलयजद्रवस्य, अन्यैव च हृद्यता पद्यानुषङ्गिणो गद्यस्येति चेतसि विचिन्त्य चम्पूमेव कथां कर्त्तुमुपजनित-निश्चयस्तद्दिनमतिवाहयाञ्चक्रे । द्वितीयेऽहन्युत्थाय कृताग्रहमव्यग्रमनसः कवयः क्षमन्ते काव्यकल्पनास्वित्युचितमेकान्तवसतेरहेतुं व्यासङ्गानां निमित्तमात्मनः प्रसत्तेरबाधकं मनोऽवधानस्य निजं कर्मान्तारामपरिकरास्पदं ग्राममयासीत् । त-त्र स्थित्वा निरतिशयमनवद्येन चेतसा विश्रुतोदात्तनायकवतीं कथां कर्त्तुमारेभे निर्माणयामास च कतिपयैरहोभिः । अनन्तरमन्यस्मिन्नहनि निर्वर्तितविधेयः प्रा-तरेव तं प्रबन्धपुस्तकमादाय निर्गतस्ततो ग्रामात् प्रतोषसत्वरमुदञ्चितक्रमेण स-मागच्छन्नेकत्र गिरिपरिसरारण्यदुस्तरोद्देशे दक्षिणेन मार्गाच्चान्द्रमसं ज्योत्स्नापु-

ङ्गमिव प्रबलान्धकारपेटिकया बन्दिगृहीतं रोहणैकगोत्रजं शशिकान्तशिलाकूटमिवेन्द्रनीलसंहत्या दायाद्यविग्रहेणारब्धं शुचीभूय स्थितं दुग्धार्णवोर्मिस्तम्बमिव वाडवधूमश्रेण्याऽलभ्यायविधृतं स्फटिकसुभगं कैलासमिवाञ्जनमहीध्रमेखलया गाढालिङ्गितं मथ्यमानाब्धिफेनपाण्डुरितं मन्दरमिव मुरारिभुजगावेष्टितं पिण्डिताकारपरिणतं हराट्टहासराशिमिव दक्षिणमुखत्विषा मण्डलितमतिविशदसुधापिण्डपाण्डुरमविरलविनीलवनराजिमालया वलयितोपान्तं प्रासादमद्राक्षीत् । तद्दृष्ट्वा च सानुस्मरणमये ! सोऽयमरण्यवर्ती भगवतो भार्गवस्य सारस्वतः प्रासादः । तदिदानीं कथमपश्यन्नपूजयन्नेव च देवीं व्रजामि । किन्त्वयमभ्यवहारकरणादतच्छङ्कीभूय गतो वासरः प्रहरमात्रावशिष्टश्च वर्तते, सन्निहितपश्चिमदिक्सङ्गमाशयेव देवस्यापि खरांशोरुत्तीर्णवानुत्तापस्तावदतोऽद्यतनमेनं वासरमिहैव गमयामि । प्रातरुषस्येव निर्झरजलामलस्नपनपूर्वमपूर्वारण्यतरुलताकुसुमैरभ्यर्च्य भारतीं यास्यामीति संप्रधार्य झटित्येव चलितस्तस्याभिमुखमुत्क्षिप्तगतिक्रमो देशान्तं तावन्तमल्पान्तरालसुगमं पन्थानमतिक्रम्य झगिति प्राप्तवान् । अथाग्रे तदङ्गणकवर्त्तिन्यामतिबहलबकुलकङ्केलतिलकतालीतमालवलयालङ्करणभाजि पुष्करिण्यां धौतचरणो निर्मलेन पयसा प्रक्षाल्य सततसञ्चारश्रमोदबिन्दुभिः कलुषितकपोलभालस्थलं वक्त्रमाचान्तशुचिजलपवित्रः प्रविश्य तस्मिन्नसमशिलाकर्मनिर्मिताभोगशोभिनि प्रशान्ताभ्यन्तरमनोहरे निर्जनतया च रहः श्रीसदसि प्रासादे प्रतिष्ठितां चतुर्मुखवदनचतुःशालाधिवासपरमेश्वरीमंशुधरचैतन्यरत्नोत्तेजनकुरुविन्दशक्तिं कविजनरसनाविमानगामिनीमखिलवाङ्मयस्वामिनीं सरस्वतीमपश्यत् । आलोक्य च देवीं झगिति स्पृष्ट इव पङ्कजप्रकरैराश्लिष्ट इव चन्द्रिकया सिक्त इव चन्दनच्छटाभिः स्नपित इवामृतरसेन सततमधिकाधिकोद्भूतनिर्वृतिरानन्दितेन मनसा ननु संप्रति सर्वकालीनो वाक्यकुसुमोपहारः श्रेयानिति कृतश्रद्धानुबन्धमाबद्धकरकमलसंपुटमनुष्टुभा श्लोकयुगलेन स्तुतिमकरोत् ।

वागीश्वरि ! जयन्त्येतास्तव ध्यानामृतोर्मयः ।
यज्जन्मा मानसक्षेत्रे बोधबीजाङ्कुरोदयः ॥
जयन्ति तव भासिन्यो भारति ! ज्योतिषश्छटाः ।
स्फुरन्ति यत्र तत्रैव ज्ञानरत्नमयो निधिः ॥

इति कृतस्तुतिः क्षितितलमिलितालकेन शिरसा प्रणम्योत्थाय च सली-

मुत्कीर्णलिखितलेपितानल्परूपकोपशोभावत्यन्तर्मण्डप एव मसृणशिलाफलकनिर्माणशुचिनि मत्तवारणके समुपाविशत्। सुखकृते च वामाङ्गेन तस्थौ। कौतुकेन च निरूपिताक्षिपत्रः समन्ताद्विपञ्चितानेकस्वरूपाणि रूपकाणि पश्यन्नपश्यदुभयतो द्वारशाखावलग्नं रूपान्यत्वमिव हिमाद्रिकैलासयोः पूर्वस्वरूपमिव पाञ्चजन्यशशिनोः परिणतिसाफल्यमिव पाषाणजातेराधारगौरवमिव धवलवर्णस्य डिण्डीरदेवताजातकमिव चन्द्रलोकपुरुषदृष्टान्तमिव श्वेतद्वीपजनवर्णिकोपदर्शनमिव शशिकान्तसृष्टं निसर्गधवलमुपलपुत्रकयोर्द्वन्द्वम्। तद्दर्शनोत्पन्नविस्मयश्च चिन्तितवान्। नन्वेतदीदृशमपूर्वाकारकमनीयं दृषत्पुत्रकद्वितयमत्र कुतो निष्पन्नं, केन सुकृतसंसर्गशालिना जनेन कारितं, केन वाऽनन्यसामान्यकौशलेन शिल्पिना विनिर्मितं, किं द्वारपालाविमावाहोस्विद्देवताविशेषः कश्चित्, उत द्वारशाखोपशोभारूपकमात्रमेवेदमिति विमर्शपुरःसरमद्भुतमणिपुत्रकालोकनकुतूहलेन व्यासङ्गितात्मनस्तस्य भगवानुष्णरोचिरस्तं जगाम। अस्तमिते च देवे मयूखमालिनि पतिविलयशोकात्कान्तयेव पूर्वया दिशा सुदूरमास्फाल्य भग्नाञ्जनकूपिकोच्छलिता कज्जलरजोराजिरिवोदयमहीधरादुल्ललास गरीयसी छटा तिमिरस्य। पश्चिमया तु झटित्युन्मथ्य भाजनमपास्तस्य प्रसाधनालक्तकरसस्य विलुठितः प्रवाह इवास्तगिरिशृङ्गसद्मन्याविरास सन्ध्यानुबन्धी सुबन्धुरो रागः। सहसा नभःश्रियाप्याच्छोट्य कण्ठतो निरस्तानि त्रुटितवरहारदण्डाद्विगलितानि मुक्ताफलानीव प्रविरलसन्निवेशमदृश्यन्त नक्षत्राणि। अथ यथागतमागत्य मिलितेषु सहचारिष्वसावुत्थाय गत्वा च पुष्करिण्यामवश्यकरणीयं कर्म सायन्तनमकार्षीत्। आयतने च सन्ध्याप्रदीपदानाय निर्जनायामरण्यभूमौ कुतश्चिद्दावमयमन्यं वा वह्निमन्विष्य समानेतुमनुचरान् प्रेषितवान्। स्वयं पुनः प्रविश्य घनतिमिरदुरालोकं तदेव पटतल्पाच्छादितमुपरिविन्यस्तपुस्तकं मत्तवारणकमध्यासितः प्रदीपचिन्तया तस्थौ। अत्रान्तरे च झगित्येव तयोर्दृषत्पुत्रयोरन्तराले गरुडमणिशलाकेव तिमिरसर्पमुत्सारयन्ती सुवृत्तसरलाकृतिरतैलवर्त्तिपरिकरा निराश्रयवती ज्वलन्ती शिखेव परमुल्ललास दीपस्य। तदीयपृथुप्रभासंपर्कसमकालमेव च द्वावपि तौ तां तथा शिलामयीं मूर्त्तिमपहाय दिव्यशरीरवन्तावचिन्त्येन तेजसा प्रज्वलन्तौ वहन्तौ च यज्ञोपवीतमतिप्रसन्नरम्याकृती द्विजन्मानौ भूत्वा देवीं प्रणेमतुश्चक्रतुरस्तोकया च भक्त्या महाकविप्रणीतेन परिणतार्थशालिना वाचां गुम्फेन सुललितं स्तोत्रम्।

देवि ब्राह्मि ! जयत्येष मन्त्रोष्मा संभृतस्तव ।
यदंशेन कवीन्द्राणां वाचि पाकः प्रवर्तते ॥
जयन्ति त्वत्कराम्भोजे मकरन्दकणश्रियः ।
जाताः श्रव्यगिरो वाणि ! यत्सेवाभिरिवालयः ॥

स्तुत्वा च पुनःपुनर्भालफलकाहतमहीतलं प्रणम्य निराकुलीभूतावागत्य द्वितीयं मत्तवारणकमध्यास्योपविष्टौ । अथाऽसौ तत्तथा तादृशमदृष्टपूर्वं कुतूहलातिशयमालोक्य यावत्तदभिमुखमसङ्ख्यविस्मयाक्षिप्तलोचनो वीक्षते तावदेकस्तयोः साधुजनाऽऽवर्जनोचितेन वचसा तं कविमालापयाञ्चक्रे पप्रच्छ च । सखे ! क एष तल्पोपरिष्टात्पुस्तकः ? । किमिति बद्ध एवाऽऽस्ते ? । किं किल नोन्मुच्य वाच्यते ? । कथ्यताम् । किमिह प्रमाणशास्त्रोपाङ्गप्रकारः ? । किमुत साहित्यभागः ? । किमागमविशेषः ? । किं पौराणिको भेदः ? । किमङ्ग ! धनुर्वेदवैद्यकादिविद्याविभूतियोगेषु ग्रन्थेष्वन्यतमः कोऽपि ? । किं वा कवेराधुनिकस्य कस्यापि काव्यकथानाटकादिकविताप्रपञ्चः कश्चित् ? इत्यादि बहुधा निबन्धसम्बन्धिनो वाङ्मयस्यान्तः किमेतदास्त इति प्रगल्भया गिरा तेनोक्ते कविरहो ! आश्चर्यं कथमसावनयोः शिलारूपयोर्मनुष्यभावः कथं चात्र दृषद्भावपूर्विकायामवस्थायामीदृशीयमसंभाव्यविषया विशिष्टैवाक्षरकथाविकासिनी प्रौढिस्तत्किमत्रोचितम् ! । अथवा, भवतु पृच्छामि तावदिति विचिन्त्य भो द्विजकुलाभरण ! नियतमावेद्यते युष्माभिरापृष्टम् । किन्त्वन्तराल एव स्तोकमुच्यसे । मम हि महता विस्मयेन तरलितस्य सखे ! पूरय कुतूहलम् । कथय कावतिविरूढमतिविशेषितालापशालिनौ युवां, प्रकृतिश्च नाम मुख्यतया भवतोरियं मानवी किमाद्या दृषद्रूपिणी, किमभिधानं युवयोः, कथं चायमेवं ग्रन्थनामग्रहानुमानसंसूचितः प्रबोधो वाङ्मयस्येति सादरं प्रत्यवोचत् । तेनापि सप्रश्रयमहो यथा दृष्टौ तथा भूतावेव भ्रातरावावामीदृश्येव सृष्टिरावयोः । अस्य हि महात्मनः तिलक इति नाम । तालकनामा चाहम् । यत्पुनरसावक्षरकथोपक्रमः तत्र किं न जानासि ये हि सुदूरवर्त्तिनोऽपि मनसैव देवीं सरस्वतीं स्मरन्ति तेषामशेषशास्त्रावबोधनिर्मलं ज्ञानं कवित्वं च संपद्यते । सदैवासन्नसेवकयोः पुनरावयोरस्तु तावदन्यदेतावन्मात्रकेऽपि सन्देहः, तदास्तां किमनेन मुधा प्रश्नपरिश्रमेण । यदुक्तस्तदेव ज्ञापय कौतुकादित्यभिहितस्तालकेन स खलु परिभाव्य चेतसि किमाश्चर्यं यथैतद्भणितमनेन इतरथैव किं न संभाव्यते, यस्माद्विविधकर्मपरिणामा हि संसारेऽस्मि-

मतिमतामग्रगण्य ! मदीय एवैष कवितापरिश्रमो, मया हि महता मनःसंरम्भेण सृष्टः प्रबन्धोऽयमिदानीं क नु किल श्रावयामि, कस्याग्रे स्वीयमभ्यस्यमानमिमं गुणोल्लेखं प्रतिपादयामि, को नाम समाकर्ण्य यथार्थवादितया सौजन्यं नाटयिष्यति, यस्मात्सकलगुणविचारचर्चाविपश्चितां धुरन्धरो धरेन्द्रभूषामणिः वत्सराजनामा नरेश्वरः परमं मित्रमिति मे पक्षीकृतो लोकैः, क्षितिभृतश्चान्ये सर्वेऽप्येकैकेन कटुरवोत्फुल्लगलनालिनाबुधव्याघ्रेणाघ्रातसन्निधयः सुदूरमुज्झिता गोजातिभिः गुणिनोऽपि स्वगुणाभिमानमहाभरग्रस्ता नोच्छ्वसितुमपि पारयन्ति, लोकश्च परगुणोन्नतिमसहमानो नीचतां प्रपन्नः, नीचाश्च निसर्गद्वेषिणः परेषु।

तथाहि—

नीचजातिर्भवत्येव लोकस्थितिविरोधिनी।
अशिवाऽपि सती येयं ज्वालास्तुण्डेन मुञ्चति॥

किञ्च—

सूनागृहघटस्येव पिशुनस्य कुजन्मनः।
आस्फालितमुखस्यापि भाङ्कारः केन वार्यते॥

ये हि व्यासादिमहाकवीनामपि प्रबन्धेष्वपवदन्ति ते किं न मादृशामपवदिष्यन्ति। साधवो हि कलिकालतमःपटलपिहितेऽस्मिन् जगति क नाम दृश्यन्ते, तेनायमहो न केवलमिदानीमेव यावत्कमपि सुहृज्जनं सत्कविमर्थिनं च श्रोतारमासादयामि तावदेवमसौ बद्ध एव स्थास्यतीत्यादि स्वान्तःपरिपिण्डितमशेषमावेदयाञ्चक्रे। सोऽथ द्विजन्मा तालकः ससंभ्रममाः कविप्रवर ! त्वमेवमसज्जनात् त्रासविधुरो विषीदसि, मा विषीद।

नो जीविकेयमिदमन्यगुणापहारकर्म प्रकामसुखदं व्यसनं खलस्य।
आखोः सुवर्णमपहृत्य कृतं निवासरन्ध्रे करोति किल कामिह देहवृत्तिम्॥

तथापि—

कुर्वतः कविताम्भोधौ प्रबन्धेन विजृम्भणम्।
कवेः प्रौढस्य कस्यास्ति जलमानुषतो भयम्॥

साधुस्तु यदेवमभिलषितो द्रष्टुं तदप्युचितमेव स्तुतः।

तापमुत्सारयन्नूनमातपत्रस्य सप्रभः।
तेनैष ध्रियते लोकैर्मस्तकोपरि सज्जनः॥

तदत्रैवं सोऽपि कर्मणा सुकृतेन तवानीतः समागतः साधुरतः किमद्याप्युचितश्रोतृजनानस्तित्वनिर्विण्णः खेदमावहसि ?। श्रावय प्रकाशय

कविप्रदीपप्रबन्धमेतस्य सहजसज्जनस्य सुकवेः सूक्तामृतरसार्थिनः परगुणप्रमोदिनो निखिलवाङ्मयविदः कोविदचूडामणेस्तिलकनाम्नो मदीयमित्रस्य, मम च किञ्चिज्ज्ञस्य, सफलय कवितागतं क्लेशमात्मनः, कुरु कृतार्थमावयोः श्रुतीन्द्रियम्। पश्यामः कीदृगुपक्रमः कथायाः, कीदृशाः संबन्धसन्धयः संविधानकस्य, कीदृशो रसः प्रस्तुतोपक्रान्तस्य वस्तुनः, कीदृशी रचना पदन्यासस्य, कीदृशः स्वगुणो भणितिभङ्गीनाम्। अन्यच्च। वर्णानामविसंष्ठुलन्यासो मसृणता परिपुष्टिर्मांसलता काठिन्यविपर्ययः कोमलता स्निग्धभावो लालित्यमिति मसृणता मांसलता कोमलता लालित्यं चेति वाणीगुणैश्चतुर्भिरनुषङ्गवत्यः सप्राणघनप्राणाल्पप्राणैस्त्रिभिर्भेदैर्विभिन्नाः क्रमेण कौकिली मायूरी माराली चेति तिस्र एव किल जातयः सत्कवीनाम्। तथा चैतांश्चतुरोऽपि गुणानावर्जयन्तः कवयः केचन ससौष्ठवैरक्षरैः सप्राणां वाचमुल्लासयन्तः कोकिलमनुकुर्वन्ति। केचिदनल्पसौष्ठववता घनप्राणेन वर्णगुम्फेन शब्दमाराधयन्तो मयूरतामाश्रयन्ति। केचिच्च मितसौष्ठवं बन्धमाश्रित्याल्पप्राणेन वचसा मरालतामनुहरन्ति। अपरे पुनरमीषां चतुर्णां गुणानामेकत्र समवायशून्येन महाप्राणेन निष्प्राणेन वा पदन्यासेन जनयन्तो वाचमेतत्पथोत्तीर्णा भिन्नजातयः कवयस्तदेवं विचित्रक्रमेण समुदञ्चितभारतीकेषु कतमजातिरस्मि कवीन्द्रेष्वेत्येतदप्यवगतं भवेदित्यादि सप्रेमदर्शितादरमुदीर्य तूष्णीमभूत्। अथासौ सविशेषविस्मयं कविरहो विज्ञता जनव्यवहारवर्त्मनि, अहो प्रौढिरालापकल्पनासु, अहो व्युत्पत्तिकौशलं कवितागुणेष्वनयोर्यथा चेयमीदृशी प्रबन्धविलोकने दृष्टिर्यथेदमीदृशमनन्यसाधारणं च साधुत्वं तथा नियतं परिश्रमः सफलतामेष्यति मदीयस्तत्किमिति नाहमुपदर्शयामीति सञ्चिन्त्य सुतुष्टेन चेतसा जगाद। हन्त ! द्विजन्मैकपुङ्गव ! कुतूहलेन संभृतगर्भायां सुगुणदरिद्रायां मद्वाचि जातेयमात्मजा चम्पूस्तदीयमपुष्टा सर्वतोऽप्यङ्गेषु दुर्वर्णा च संवृत्ता न नाम यथावद्दर्शिनो जनस्य दर्शयितुं पारयत्येवमप्यर्थिता चेद्दर्शयामि, सा पुनरमुष्यां भद्रं किमपि विधिना लिखितं भवेत्तदियमादृता युष्माभिरभिनन्दनीयां दशामासादयति। किन्तु न नाम यदि प्रस्तुतरसरभसविच्छेदीति खेदस्य हेतुर्भवामि। तदिमं दीपकोद्योतनकृते वह्निमानेतुं मया प्रेषितमायान्तमनुचारिणं लोकमङ्गणादेव निवारयामि परतः क्षेत्रपालदेवकुलिकायां प्रवेश्य च शयनाय निरूपयामि। एवं कृते रहसि निश्चिन्तेन चेतसा निरवद्यमारभ्यते कथेयमिति तावदाशयो मे परतस्तु भवदिच्छा प्रमाणमित्यभिधाय भवत्वेवमिति तिलकानुमोदितेन तेन द्विजन्मना तालकेन सम-

अयमनुज्ञातः समुत्थाय तस्माद्देवीभवनान्तर्मण्डपादङ्गणे बभूव । स्थित्वा तत्र यथा यत्समुचितमालोचसूत्रितं कृत्यं त्वरितं तथैव तदखिलमविरलरभसाञ्चितश्चक्रे ।

स कविरथ यथावत्सूत्रितैकान्तरम्ये
सदसि वचनदेव्याश्चेतसा सुस्थितेन ।
अविशदसमसूक्त्या सेवितुं तौ द्विजाती
निवसति हि समग्रा यत्र सारस्वतश्रीः ॥

इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
कविवंशनिवेदनो नाम सारस्वतश्रीपदाङ्कः
प्रथम उच्छ्वासकः ।

# द्वितीयोच्छ्वासकः ।

ततश्चासौ तदेव मत्तवारणकमनुसृत्योपविष्टः सरभसमहो यदाऽऽलोचितं कृतं किं नाम तत्तथा सर्वमभूच्च ते निराकुलं हृदयं ?, एवं चेत्त्वरितमारभ्यतां कथेयमेतदाकर्णनरसोत्सुकीभूतमनसो हि वयं प्रतिपालयन्तो भवन्तमेव हि तिष्ठाम इति परिचयानुरोधस्निग्धया दृशाऽभिनन्द्य भणितः सुभाषितरसार्थिना तालकेन सोल्लासमेवं क्रियत इत्यभिधाय बन्धादुन्मुच्य पुस्तकमुचितक्रमेण श्रावितानभीष्टदेवतोपश्लोकनादिकवीश्वरप्रक्रियः कथामारेभे ।

श्रूयतां प्रसिद्धमिह पयोधिवलयवप्रायामवन्त्यां कनकमिव धातुषु, माणिक्यमिव रत्नेषु, तिलकवर्तनमिव मण्डनेषु, मुखमिवाङ्गावयवेषु, त्रिदिवमिव भुवनेषु, नन्दनमिवोद्यानविपिनेषु, प्रकृष्टं पत्तनेषु, सर्वाङ्गसादृश्येन सोदरं पुरन्दरपुरस्य, उपरिनिवासेन तलवर्त्तिनः फणिपतिनिवासनगरस्य शिरसि च दत्त्वा पदमिव तिष्ठमानं, सुदूरमञ्जनच्छायं, गगनमनुप्राप्तैस्तत्कान्तिसङ्क्रमेणेव श्यामलितैरमलमरकतोपलफलकसङ्घट्टसृष्टैरट्टालकैरलङ्कृतेन सितमणिनिर्माणवता प्राकारचक्रेण कुण्डलितम्, उत्तुङ्गदुर्गाट्टालकपरिपाटिभित्तिभिः स्खलितादभ्रतटिनीप्रवाहाद्धःपतितैरिव निर्जितार्णवभरणविस्तरैर्वारिभिरापूर्णगर्भया परिखया प्रपञ्चितोपान्तरमणीयं, परिखातटीष्वनिलसन्निवेशवलयितेन यज्ञानलधूमसमुदयेन समन्तादसितकाण्डपटेनेव विनिवारितप्रवेशं कलिकालदृष्टेः, शशिकरानुषङ्गनिष्यन्दिनामिन्दुकान्तदलविरचितच्छादकानां निम्नाध्वयायिना रसेनेव निर्मलतमेनाम्भसा पूरितगर्भगम्भीरैरङ्गणकवापीविशेषैर्भूषिताभिरमरमन्दिरश्रेणिभिरभिरामचत्वरोद्देशम्, उपरितिर्यक्पतितपृथुतरकिरणच्छटाग्रकैतवादातपत्राणाय शिरसि दत्तेनोत्तरीयवसनाञ्चलेन सततमर्थिजनागमनं प्रतिपालयन्तीभिरिव बहिःस्थिताभिः सत्रशालामणिमण्डपश्रीभिरुद्भासमानं, मणिभित्तिसङ्क्रान्ताभिः प्रसारकनिविष्टानां तुन्दिलशरीरिणां वणिजां प्रतिमूर्त्तिभिरन्तर्दृश्यमानविश्रान्तधनदैरिव निरन्तरमापणैः सारीकृतक्रोडं, कृतकनकप्रसारकैः सौवर्णिकैरपावृतं रूपमिव सुमेरोः, पतिमुखविलोकनानिमेषरम्याभिः कुलपुरन्ध्रिभिरनूर्ध्वगतं खण्डमिव स्वर्गस्य, गृहीतसितरत्नादर्शमण्डलाभिः पण्यरमणीभिः स्वर्गसङ्गतं संस्थानमिव चन्द्रलोकस्य, सकलशास्त्रानुकूलवाणिना निवासिजनेन साक्षात् स्थानमिव सरस्वत्याः, सुनेपथ्यभूषणवता प्रकृतिवर्गेण

वरयात्राडम्बरमिव कुबेरस्य, स्फुरत्किरणालोकशालिना प्रासादपुष्पकभरेण कटकमिव दिवसराजस्य, प्राकारवलयवर्तुलं मुखमिव जम्बूद्वीपस्य, लसद्गोपुरपताकांशुकं नेपथ्यमिव भारतवर्षस्य, पीवरायतकलशस्तनं यौवनमिव वसुन्धरायाः, मणिभवनभानूज्ज्वलं लावण्यमिव भुवनश्रियो, मर्त्यलोकनटेन निजाननप्रोतं प्रतिमुखमिवाखण्डलपुरस्य, दक्षिणापथेन लिङ्गिना परिगृहीतं व्रतवेषचिह्नमिव विद्याधरलोकस्य, तलभूमिकुट्टिममिव त्रिदिवहर्म्यस्य, मुकुटमण्डलमिव फणिभुवनभूपालस्य, जगत्त्रयाभोगभूषणं निकामरमणीयमस्ति मलयमुद्रितायां दिशि कुन्तलेषु तटे गोदावरीतिमहासरितः प्रतिष्ठानं नाम नगरम् ।

लीलामण्डपरत्नभित्तिषु सितस्वच्छासु भूरिक्रमं
सङ्क्रान्ताखिलसञ्चरत्परिजनप्रत्याकृतीनां छलात् ।
यस्मिन्नीश्वरमन्दिरेषु परितः सन्दर्शयन्ती सदा
च्छायाखेलनकं न कस्य हरते सौन्दर्यलक्ष्मीर्मनः ॥

अपि च—

विलसदमलमुक्तास्तम्बलग्नेन्द्रनील-
द्युतिदलसरिकालीकर्बुरैः कुन्तलीनाम् ।
सरलतरकटाक्षैः श्वेतकृष्णैककर्त्ता
प्रभुरसमशरोऽभूद्यत्र यूनां जनेषु ॥

यत्र च कवाटवर्तिना विलसदमलमाणिक्यमणिमरीचिपटलेन सततमन्तःप्रसूतलक्ष्मीनिमित्तमाहितेन कौसुम्भेनेव वाससा चिह्नितं द्वारमादधानैरनवरतमुपस्थितातिथिपदप्रक्षालनजलप्लवेनेव चन्द्रोपलकसोपानकद्युतिभरेण प्लाविताङ्गणकवसुभिः सुवर्णभवनैराभरणपदकबन्धैरिव निविष्टनायकैरलङ्कृता शोभते समन्तादाभोगलक्ष्मीः । यत्र च सुवर्णैकस्रष्टिना धातुव्यवहारेण कथीभूतो वातिगेन्द्रविद्यागमः, सङ्क्रान्तनिधानकोटिभिर्भवनैः प्रलीनः खन्यवादः, प्रभूतभव्यगणिकाङ्गनोपभोगलीलाभिः व्यशीर्यन्त विवरप्रवेशवार्त्ताः, मन्दिरदलीकृताशेषविषहरोपलशिलाप्रभावेण भग्नाहिरूपप्रचारतया समुच्छन्नो गारुडव्यतिकरः । यत्र च प्रतिपथमतिप्रांशुहरमन्दिरशिखरशूलाग्रपाटितान्निशासु नभस्तलचारिणश्चन्द्रमसो मण्डलाद्गलितैरनल्पसंपातिभिरमृतरसैरिव सुस्वादुशीतलविनिर्मलैः पयोभिर्भरितगर्त्ताः कमलकुवलयामोदसङ्गिनो हृदयमानन्दयन्ति कोटिशो जलाशयविशेषाः । यत्र च प्रतिहर्म्यशिखरमखिलगरलापहारमणिशिखासङ्गमसमाकुलैरवनहनफणिभिरुन्मुक्तवाजिविधुरं प्रवर्त्तयति सारथौ

रथं कथमप्यन्तरिक्षमभि सरोजिनीबन्धुरिन्दुश्च निरन्तरमुत्तुङ्गतरविहारशृङ्गाग्रैलास्खलितवर्त्मा गगनपथेन गन्तुमक्षम इव मणिमयविमलभूतलसङ्क्रान्तया प्रतिमूर्त्या तलगतं पन्थानमनुसृत्य सदैव तं तावन्तं प्रदेशमुल्लङ्घयति । यस्मिंश्च दृश्यमानबहुपदार्थैरमणीयाः सकर्णकाः स्कन्धशाखाशरीरनिःसारिभिः प्ररोहैरीकारान्ताः सुललिताभिरधोललन्तीभिर्मञ्जरीभिः प्रदत्तमात्रास्तिर्यग्विसारिणीभिः शिखरशाखाभिर्विसर्गानुस्वारवत्यः सुवृत्तशालिभिः फलैरधिरूढरेफाः शिरोगतविहङ्गमोदञ्चिताभिश्चञ्चुभिर्विरचितवाद्यपरिसमाप्तिफुल्लिकाश्चान्तरान्तरागतैः पुष्पगुच्छैरुचितरचनासन्निवेशपेशलाः कुसुमचापप्रशस्तेरक्षराणां पङ्क्त्य इव स्वान्तहारिण्यो विभान्ति परिसरेषु सद्भूरुहप्रधाना वनराजयः । यत्र च सुस्वामिपरिपालिते सुदृशाया विभूतिविभ्रमाभोगसारया श्रिया सर्वोऽपि नृपायते पुरुषवर्गः, सर्वोऽप्यवरोधवनितायते स्त्रीजनः, सर्वोऽपि राजभवनायते गृहाबन्धः, सर्वोऽपि राज्यायते प्रतिभवनमाचारप्रपञ्चः, केवलमशेषतोऽपि सौस्थित्यादनार्त्तितया लोकस्य बभूव तदन्तर्वासिनीनां देवतानां दौस्थ्यमुपयाचितप्राप्तेः । किं बहुना ।

यत्राऽऽयान्ति विभूतिमिन्द्रनगरन्यक्कारमातन्वतीं
द्रष्टुं मेरुगिरेः स्थलात्सुमनसो नित्यं तथा ह्यम्बरे ।
दृश्यन्ते सुरसद्महेमकलशत्विड्वृष्टिकानां मिषात्
तेषां काञ्चनधूलिपांसुलपदैरापिञ्जरा वीथयः ॥

तस्मिन्नसमशोभाविभूतिमति श्रीभाजि नगरे नृगसगरभगीरथादिभूपालकुलकीर्तिवित्तापहरणराजोपधिरापयोधिपुलिनसङ्क्रान्तविक्रमः, क्रमागतां श्रान्तामिव कृपाणपत्रारोपणेन संवाह्य राज्यश्रियमाददानो गृहीताराातिमूर्धभिर्गुलिकाभिः सिद्ध इव विद्याधरो रणेषु, तारुण्यभरतरङ्गितानामनङ्गविधुरिताङ्गनादृग्दीनामाश्रयपयोराशिः, असिदण्डसङ्घट्टितारिवंशनिकषणोल्लासितप्रतापसप्तार्चिः, सप्तार्चिरिव तेजसामधीशश्चण्डरोचिरिव चूडामणिः भूभृतामनिष्ठनरकण्ठखण्डनखडत्कारनिविडारवसूच्यमानलग्नक्षणः, परिणेता जयश्रियः, सहचारिसुभटभुजभीषणकृपाणकिरणान्धकारकरः, तस्करो विपक्षभूपालसम्पदां, चलितासिपत्रलोचनो यौवनारम्भ इव वीरलक्ष्म्याः, समुक्षिताजिविजयारवो देवतादेश इव प्रतापसाधकस्य, सिद्धो ब्रह्माण्डविवरस्य, कृषीवलो भारतक्षेत्रस्य, सततमवनतिविलोलनरपालमुकुटमणिदीपकप्रकरैरवतार्यमाणारात्रिकः सम्पत्रामग्रणीः श्रीमतां बभूव भूमण्डलाभरणं राजा मलयवाहनो नाम ।

दिग्यात्राप्रस्थितासु प्रतिपथमभितो यस्य सेनासु मन्ये
नो राज्ञामेव लक्ष्मीर्झटिति विघटिता वक्षसः शार्ङ्गिणोऽपि ।
कामत्कुम्भीन्द्रचक्रक्रमनमितमहीगोलदोलायिताब्धि-
क्षुब्धोर्मिस्तोमफालप्रसरवशविपर्यस्तशय्योरगस्य ॥

अपि च ।

श्यामा समीकभुवि यस्य सुवृत्तमुष्टि-
मूलेन्दुरत्नफलकोपरि खड्गयष्टिः ।
दृष्टा परैः प्रलयशङ्किभिरुल्लसन्ती
शीतांशुबिम्बविलयादिव धूमवर्तिः ॥

यस्य च निजावसरवर्त्तिनं नीराजनोपहारमातन्वतस्तत्कालमिलितसकलबलभरनमितमेदिनीपीठपृष्ठस्य कमठपतेर्वल्गदविरलविलोलवाजिविन्यस्तखुरनिष्ठुरखटत्कारनिबिडारवच्छलेन भज्यमानपृथुकटाहकर्परध्वनिरभूतपूर्वो भारतसमरसङ्कटेऽपि विसङ्कटाभोगमुल्ललास । यस्य च समरसंहृतारातिकुलकुटुम्बिनीभ्यः कुङ्कुमालेपमादाय शक्तिमान् पादलेपसिद्ध इव मनुष्यजनागोचरेषु सञ्चचार परितः प्रदेशेषु प्रतापः । यस्य च निकामवृद्धा वृद्धोचितं चरितमादृत्य त्रिपथगामिन्या गीर्वाणसरितः स्रोतसां त्रयेऽपि स्नातुमभिलषन्तीव बभ्राम भुवनत्रयं कीर्तिः । यस्य च महापङ्कमग्नाऽऽदिकूर्मपृष्ठावस्थानलग्नमम्भसा धारागतेन क्षालयितुमिवात्मनः पङ्कमावासिता कृपाणे काश्यपी । यस्य च स्वर्भानुभयस्थानं चन्द्रमसो मण्डलमपहाय तदनुकारहारिणि हारप्रभावलयमण्डलिते वक्षसि बभूव सुस्थिता लक्ष्मीः ।

किञ्च—

वक्षसि निवेश्य लक्ष्मीमुपरि च कविजीवितेन मुखकमले ।
विन्यस्यासनमुचितं गौरविता भारती येन ॥

यः खलु निखिलनरपालचूडामणिश्चापलपरित्यागनिश्चयार्थमिव कृतकोशाया प्रसादितो लक्ष्म्या, निजोचिताचरणव्यभिचारनिरासार्थमिवोत्क्षिप्तफलया प्रत्यायितः कीर्त्या, त्रिनयनविनाशितानङ्गसङ्गमनिवृत्त्यर्थमिव कृतशरीरस्पर्शो रूपेण, जलाधिपत्यपरिपालनार्थमिव गृहीतो वात्सल्येन, समरविषयाधिकारास्थिरीकारार्थमिव जनितदक्षिणकरग्रहो विजयेन, निसर्गोन्नमनदुर्नयापनुत्तिप्रतीत्यर्थमिव स्पृष्टचरणः प्रणतारिपार्थिवशिरःश्रिया । यो हि तेजसामाश्रयो न सूर इव सहस्रशः करैर्मण्डलमुत्तापयामास, न शीतांशुरिवापरोदये वक्रता-

मधत्त, न ससार्चिरिव दाहकृता व्यापारेण भूतिमुत्पादयाञ्चक्रे, न प्रदीप इव पात्रोपरि ज्वलितवान् , न माणिक्यमणिरिव सुवर्णबन्धेषु नायकत्वमालम्बते स्म । किं बहुना ।

ग्रीष्मस्तीव्रतमैः प्रतापविहृतैर्वर्षा रिपुस्त्रीदृशा-
मासारैः शिशिरश्च सान्द्रतुहिनच्छायैर्यशोराशिभिः ।
इत्येवं विहितक्रमेण भरिते कालैस्त्रिभिर्भारते
वर्षे यो व्यसृजत्कृपाणमवनेः स्वामी भुजा मेचकम् ॥

स राजा शिशुरेव सुकृतसेनासमग्रे विशेषजिगीषयेव गते लोकान्तरं पितरि स्वयं भुजबलेनाऽऽहृत्य दिग्विजयं, विजयनिशितेनासिना विलूय मूलतः शात्रवं वंशम् ,आज्ञया प्रवेश्य द्वारेण राजन्यकं, प्रतापेनाक्रम्य समस्तान्याशामुखानि,यशोभिराघृत्य त्रीण्यपि भुवनानि, धर्मेण निरस्य प्रबलं कलिकालं, गुणैरनुरञ्ज्य सकलं साधुलोकं, विनयेन सन्मान्य गुरुजनं, सत्कारेण संवर्ध्य बन्धुजातं, हृदयेनावर्ज्य परितः प्रणयिवर्गं, प्रसादेनाऽभिनन्द्य क्रमागतमनुजीविसामन्तचक्रम् ,अनुरक्तप्रकृतिकमनीयामनेकशः प्रजावतीं ककुप्करिकुम्भसिन्दूरभरितसीमन्तरेखोपशोभितामवैधव्यचिह्नमिव चतुरम्भोधिवलयालङ्कारमादधानां वंशपत्नीमिवानन्यभोग्यां विधाय वसुमतीमेकातपत्रशेखरं साम्राज्यसिंहासनं भेजे । भुवः सम्बन्धेषु च स्वामिकृत्येषु चरितार्थतया सुस्थितान्तःकरणवृत्तिरनुभवितुमशेषाणि संसारसुखानि, कर्तुं यौवनोचितान्विलासान् , विधातुमभिमताभिलाषपरिपूर्त्तिभिः कृतार्थजन्म,समग्रगृहपरिग्रहादिचिन्तापरं राज्यमभितोऽपि धीमतां धुरन्धरे मन्त्रिणि समस्तमारोपयामास । मन्त्री च तस्य कटकाश्रयो दक्षिण इव भुजस्तम्भः, स्वमतिसंहृतारातिरमणीशृङ्गाररसप्रशोषको मूर्त्त इव प्रतापः, परिगतो मन्त्रविक्रमाभ्यामखिलविद्यावतारपात्रं, खन्यवादी वैरिवंशमूलस्य, वशीकरणकोविदो लक्ष्म्याः, कृतजलस्तम्भो व्यवहारेषु, दर्शिताग्निस्तम्भः प्रजोपतापेषु, सततमवनतानेकराजकललाटतिलकपङ्कलेपादिव भर्तृभिक्षागतारिकुलकुटुम्बिनीबाष्पजलधाराधौतचरणः, शरणमासप्तसागराया भुवो, भूषणं द्विजातिवंशस्य, पुङ्गवः पुंसां विभूतिवर्द्धनो नाम । यो नूनमनिर्मथितसमुद्रमनिरस्तसत्त्वमपीडितभोगीश्वरमक्षपितविबुधलोकममन्दरागप्रपञ्चमेकेनैव प्रज्ञागुणेनाकृष्य लक्ष्मीं निजस्वामिनः सततमुरःस्थलनिवाससुस्थितामकरोत् । यश्च महीभृतामाञ्जनेय इवोन्मूलने, नल इव प्रतिष्ठापने, पयोधिग्विाडीकरणे. राम इवोपयोगविधाने प्रभुरभूत् । किं बहुना ।

यः शीतलैर्मृदुलैश्च करैः प्रजानां लोकं निशाकरमणिप्रतिमाभमच्छैः ।
प्रासक्रमं तुहिनरोचिरिवाभिपीड्य निष्यन्दयन्न वनितापहरो बभूव ॥

अपि च ।

स एव मन्त्रिणामाद्यो यस्य मन्त्रबलात्तदा ।
ननर्त्त जलता भर्तुश्चलितं तु पदं द्विषाम् ॥

स तेन मन्त्रिणा परिगृहीतसकलराज्यचिन्ताभरो निराकुलः कदाचिदास्थानमण्डपगतः प्रणामदोलायितानेकनरपालमुकुटमुक्ताफलकिरणनिकुरुम्बैश्चामरैरिव वीज्यमानः श्रिया, कदाचित्कविसभामधिष्ठितो विचारयन्काव्यजातमुल्लसन्तीभिरमलदशनांशुराजिभिरुत्सवादिव दीयमानरङ्गावलीभिराभूष्यमाणवदनाङ्गणः सरस्वत्या, कदाचित् तुरगवाहनविलासमनुसरन् वाह्यमानविविधहरिखुरखटत्कारकैतवेन कटितिवर्णनाक्षरैः पदे पदे प्रशस्यमानः पृथिव्या, कदाचिन्मृगयामुपेतो मृगवधाकूतचकितेन रजनिमासाद्य तं हरिणमात्मनो मित्रमुरसि धृत्वा दिवि पलायमानेन परार्पणेनात्मीयरक्षणमितीव दर्श्यमानसूकरश्चन्द्रेण, कदाचिद्विभ्रमोद्यानवर्ती सुरभिमुखश्वासदर्शनाय बन्धुप्रेमागतेनेव शिशिरेणानुगम्यमानः समीरणेन, कदाचिज्जलक्रीडामाचरन्नुभयपार्श्वागतेन चतुरसीमन्तिनीकलितकनकशृङ्गकोशोज्झितस्याम्भसश्छटायुगेन सरभससमभ्यागताभीष्टवत्सलतया प्रसारितेनेव भुजलताद्वयेन परिरभ्यमाणो वरुणेन, कदाचित् शृङ्गाररसरसां गोष्ठीमनुतिष्ठन् समन्तात्पतद्भिरमलगङ्गाम्बुधवलैर्विलासिनीकटाक्षैः रूपेण सगोत्र इति स्वराज्य इवाभिषिच्यमानो मनोभवेन, कदाचिदचिन्त्यपथं प्रेक्षणकमालोकयन्नुपरिमण्डपतुलाफलकसङ्क्रान्तया प्रतिमूर्त्या त्रिदिवनगरागतेनेव दृश्यमानविलासोत्सवः पुरन्दरेणेत्यादि, सदैव देवैरनुकूल्यमानाभिकमनीयकेलिः कालमतिवाहयाञ्चक्रे ।

एवमस्य बहुशो विपश्यमानैर्धनैकस्वामिना कुबेरेणाप्रार्थितैः श्रियो नाथेन विष्णुनाप्यदृष्टैस्त्रिभुवनाधिपत्यपरमेश्वरेण मघवताऽप्यननुभूतैरभिनवोद्भूतप्रभूतभङ्गिभिर्विलासैः सारीकृत्य सकलं संसारसुखचक्रवालमनुभवतः कदाचित्क्रमेण कालपरिपाटेरुदयपक्षः प्रोषितवधूवदनचन्द्रस्य, बन्धयोगः पामरीसम्मदरसस्य, कवाटोद्घाटः पथिकनिर्गमस्य, पञ्जरकभङ्गश्चण्डभानुपञ्चाननस्य, कुसुमितसप्तच्छदोरुपरिमलेन मदागम इव नवर्त्तुवारणस्य, विबुद्धबन्धूकवनालोहितद्युतिभिः सिन्दूरमुद्राविष्कार इव पुष्पेषुराजस्य, प्रसार्यमाणजिगीषुभूपातपत्रैः कुसुमकाल इव नरेन्द्रचर्याणाम्, उत्तेज्यमानविविधायुधालोकैर्दिवस इव

वीरचक्रद्वन्द्वघटनायाः, स्फुटितनीलोत्पलप्रभान्धकारितोऽपि प्रसन्नो दिङ्मुखैः, दलदरविन्दोड्डीयमानकिञ्जल्कधूलिभिः पांसुलोऽपि निर्मलो नभस्तलेन, मदकलमरालमण्डलीभिर्वाचालोऽपि मौनवाक् केकिभिर्दिग्जयोद्यतावनीन्द्रचापवापिनिर्मुक्तहेतिरिन्द्रायुधेन ग्रीष्मानुभावपावकेनोत्ताप्य वर्षाम्भसा पायितजलैरिवातिपरुषैरंशुनाराचैस्तीव्रेण भानुना दुर्दिनैकभूमिगृहादुल्लसत्कान्ति दिव्यं वपुरवाप्य निर्गतेन रसायनसिद्धेनेव खेचरीभूतेन चन्द्रमसा निर्मलं गगनमादधानः प्रबलजलदधाराशरनिपातव्रणितां पालिश्रियमिवान्वेष्टुमागतैः कूजितकूतोचितालापैर्मरालपत्रिभिः शोभितसरोवरः पाकपिङ्गतापसारितया कलमकणिशानामादिनीलतयेव तटस्थया संचरत्तरुणशुककुलप्रभया मण्डलितकेदारः केदारोदरविसर्पिणीभिस्तुषपुटाद्बहिर्निर्गताभिर्निष्पत्तिपरिणतकणिशतण्डुलप्रभाभिरिव कलमपालिकोज्ज्वलविलोचनाञ्चलदीधितिभिर्धवलितधरातलः समन्तादुन्मिषितकाशच्छटाकटाक्षयष्टिभिरालोक्यमान इव सरित्पुलिनलक्ष्मीभिरुल्लसद्बहलकह्लारपरिमलविलासिना समीरेण परिवृतः पवित्रश्च प्रबोधेन विष्णोराजगाम जगतामाप्यायनविशारदः शारदः कालः ।

यस्य च हठप्रविष्टस्य बलीयसो नवर्तुराजस्य परिग्रहेण सपदि प्रणश्यतो वर्षर्तुसामन्तादुल्लुण्ठ्य समन्तादिव गृहीतो विभूतिपरिकरः । तथाहि । सर्वतो विनिद्रकुवलयवनैर्गृहीतमसितप्रभारूपेण मेघात्मजं तिमिरमतिभरेण विस्फुटितशेफालिकाकुसुमैः स्वीकृतास्रवन्मधुरसाकारेण सततवृष्टिरुत्साहाज्जिगीषुभूपालैः करे कृतं दिग्जययात्रासु परिग्रहवशेन झटित्येव जिष्णुचापं विग्रहारम्भाय सज्जितैः करिभिरावृता कर्णशङ्खाभरणभावेन धवलकान्तिर्बलाकाभिः श्रीमता च बलिराजमहोत्सवेन विधृतमुद्दीप्रदीपकशिखावलीव्याजेन वैद्युतं तेजः । किञ्च । यत्र—

संलीनास्तिमितं चकोरतरुणीनेत्रान्तशोणश्रिषु
व्यासोत्तानितबन्धुजीवकुसुमेष्विन्दिन्दिराणां स्त्रियः ।
पान्थप्राणकथाक्षरावलिपरिच्छेदप्रदत्ता इव
भ्राजन्ते नवधातुरागतिलकेष्वन्तर्मषीफुल्लिकाः ॥

अपि च ।

अतिवर्तितबहुवर्णैर्वृद्धैरिव धवलभावपलिताढ्यैः ।
कृत्वा विष्णुपदाश्रयमम्बुधरैः स्थीयते यत्र ॥

अथ स तस्मिन्नेवंविधाभोगशोभिनि शरत्समये सविलासोऽयमेक-

स्मिन्नहनि प्रातरेव प्रणयपरिणतानेकपुरुषप्रपञ्चितावस्थानमास्थानमण्डपमुपेत्योपविष्टः सह मन्त्रिभिः किमपि पृथुभरतभगीरथादिपूर्वभूपालचरितानां विचारेण सह सामन्तैः किमपि निगृहीतदुर्दमारातिवार्ताभिः, सह सुभटैः किमपि विषमसमारोपरचनाख्यानकरसेन, सह कविभिः किमपि बाणभट्टाभिनन्दप्रभृतिकविचक्रकवितावरिष्ठगोष्ठीभिः, सह तार्किकैः किमपि प्रमाणशास्त्रोपन्यासविभ्रमेण, सह विलासिनीभिः किमपि शृङ्गाररसानुवर्त्तनेन, सह नर्मसहचरैः किमपि परिहासमिश्रितालापकौशलेनेत्यादिनानारसोपक्रमक्रमेण हृदयमनुकूलयन् प्रस्तुतरसाक्षेपनिर्भरमवतिष्ठमानः वसन्तशीलनामा देवस्य प्रणयपात्रमुद्यानपालो दर्शनार्थी द्वारि वर्तत इति निवेदिते तेन राजा ननु स्वाधिकारविधेयतया मयाऽनुज्ञातो नन्दावटनामन्याभीरविषयवर्त्तिनि पुरे निभालयितुमुद्यानमितो गतश्चिरादागतोऽयमायातु प्रवेशय त्वरितमित्यादिदेश ।

अथासौ प्रतीहारव्याहृतो वसन्तशीलः प्रविश्य यथावदुचितप्रणामपूर्वमर्पितोपढौकनफलो हन्त ! समागतो भवानिति संभाषितः प्रभुणा देव ! समागतोऽस्मि किन्तु कौतुकमलौकिकं किञ्चिदित्यद्भुतरसावेशतरलितो ब्रुवाण एव नातिदूरमग्रे निषसाद । किमाश्चर्यमिति च रसान्तरतरङ्गितेन भूभृता पृष्टः ससंरम्भमाबभाषे । देव ! साम्प्रतमनेन दर्शिताशेन शरत्समयनाम्ना नवर्तुराजेन सर्वतः प्रसत्तिमानीते जगति तदाऽहमनुज्ञया देवस्य नवोद्यानकार्येण गतो नन्दावटं नगरम् । अनन्तरमन्यस्मिन्नहनि तत्र सत्वरमुत्थाय प्रातरेव घनागमकृतं विशरारुत्वमनुत्सारयन्त्या शारदया श्रिया सज्जीक्रियमाणमुदीक्षितुमुद्यानकाननमगच्छम् । तत्र च पल्लवकनाम्ना कर्मकृतां वरेण समन्तादेव योजितानि घनसलिलसम्पातसेकावधीरितव्यापारेणारघट्टयन्त्रेषु घटीमालामण्डलानि विरचितान्यतिवृष्टिविघटितानि कुल्यासु तटानि बद्धानि पयःपूरापनीतपालीनि विटपराजिष्वालवालवलयानि सलीलमुन्नमितानि निजनिजभरनिपातनमितानि मण्डपलतावनेषु शिखराणि सम्भावितानि कठोरधाराग्रपाटितानि कदलिखण्डेषु दलानि विघटितानि झंझानिलविलग्नानि वनस्पतिषु कण्टकितवल्लिजालानीत्यादि सादरमितस्ततः प्रतिलतामण्डपं प्रतिपादपं प्रतिविटपं च मूलतो निरूप्य परिकरितपालिषु जलाशयेषु चक्षुरक्षिपम् । तत्किमुच्यते ! । निर्मलाम्बुसंबन्धिनी मनोहरैव विभूतिस्तत्र जलरुहाम् । तथाहि ।

मूलेऽल्पप्रमितिश्लथैस्त्रिभिरथ छिन्नैः पृथुश्यामलै-
रग्रे शुभ्रघनैः क्रमेण लघुभिर्विश्लिष्टवत्कंदलैः ।

अन्तःश्वेतशिखाकणाङ्कितसटै रापाण्डुभिः केसरै-
राकीर्णोन्नतकर्णिकं विकसति क्रीडातडागेऽम्बुजम् ॥

अपि च ।

वापीषु स्फुटितारविन्दविवरक्रोडे कडाराकृतिः
कोशः केसरशृङ्गशुभ्रकणिकाचक्रेण पर्यञ्चितः ।
लक्ष्म्याः कर्णविभूषणस्य परितः प्रान्तेषु मुक्तामणि-
श्रेणिस्वीकृतहेमपत्रवलयस्यालङ्कृतेर्विभ्रमम् ॥

एवमन्यतोऽपि निभालितानेकनूतनोन्मिषितमुकुरकुसुमामुद्यच्चक्षुषो निर्वापयित्रीमुद्यानसंपदमुदञ्चितप्रीतिः कृतकृत्य इवान्यत्र परिशिष्टे कर्मणि नियोज्य तं कर्मकराग्रण्यमानन्दितेन चेतसा ततो निर्गत्य समागन्तुमारब्धवानस्मि । अथ तथाऽहमेकाकी निश्चिन्ततया समन्थरमागच्छन्नेकत्र पुरपरिसरोपान्तप्रदेशे परुषपूषातपकदर्थितश्छायार्थी सौगतमवाप्य हृद्यमायतनं तस्मिन्बहिरेव द्वारमत्तवारणके समुपाविशम् । उपविश्य स्वस्थतामुपेतश्च किञ्चित्सलीलमितस्ततः स्वतन्त्रालोकमक्रमेण देव! यावदग्रे विलोकयामि तावज्झगित्यङ्गणकवर्ती यः प्रातरुद्यानं गच्छता मया स्फटिकसृष्टिपरिपाण्डुरो दृष्टस्तं तस्मिन्नवसरे चैत्यमिन्द्रनीलशिलानिर्मितमिवातिहरितवर्णमद्राक्षम् । दृष्ट्वा च सविस्मयमहो! किमेतदद्भुतविजृम्भितमिदानीमेव मया स्फटिकशुक्लोऽयमागच्छता दृष्टः कथमियतैव क्षणे हरितमणिनिर्माणनीलतां प्रपन्नः । किमेतस्यैष समयवशादनेकवर्णधरः कोऽपि मणिदलविशेषः, किमन्योऽयं देवतानुभावसिद्धो मुहूर्तमात्रेणापसार्य शशिकान्तमयीं सृष्टिमिन्द्रनीलेन घटितः, किमेवंरूप एव स्वयंभूत्वेन समुच्छेद्य तं पुरातनं चैत्यमुत्थितो रसातलात् । किमेतद्धरितवनराजिनीलिमानुवासिता नीलमेव सकलमालोकते मदीया दृष्टिः, किं स प्रदेशोऽपि नायं यस्तेन स्फटिकधवलेन शोभितश्चैत्येन, किमेकयाप्यथ देवतया प्रसर्पतः स्खलितमासाद्य परावर्तिते चक्षुषीत्यादि विकल्पयत्येव मय्यकस्मात्तस्मिन्ननुष्टुभां श्लोकमाश्रिता सरस्वती समुत्तस्थौ ।

अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते ।
गुणोऽपि क्लेशहेतुः स्याद्विश्रान्तः क्वापि देहिनि ॥

श्रुत्वा च तामहमत्यद्भुतावेशबहलितो ननु किमिदमचिन्त्यमाश्चर्यमिति यावत्किल विभावयितुमारभे तावद्भारतीविरामानुपदमेव तस्य चैत्यस्य गर्भाज्झगिति वितर्कावकाशमपनयन्नुद्गमाननिर्गमनमार्गस्तां निजामेव

शशिकान्तधवलामाकृतिं चैत्यमानयन्नतिहरितया देहत्विषा सिक्त इव नीली-रसेन छुरित इव दलितेन्द्रनीलधूलिभिश्छादित इवारविन्दिनीदलैर्नील-पक्षपटावगुण्ठितः सङ्केतवानिव शरल्लक्ष्मीमभिसृतो हरितांशुकावरणो नीलपट इव मुख्यं रागमावहन् शरदागमकृतः करसंपुट इव भुवनश्रियो नीलमणिवि-निर्मितः शुक्तिपुट इव रतेर्हंसो विनोदयितुमागतः कृतापूर्वरूपो वेषकार इव शिरसि विस्फुरन्त्या विभूषितः शिखया शकुन्तराजस्य वक्त्रेण विरचिता चञ्चू-रिति सङ्घर्षेण पद्मरागमणिसृष्टयेव पाटलया चञ्च्वा विराजमानो विजित्य जलदागमाद्गृहीतं शरत्कालेन प्रदत्तमात्मीयं विजयवेषमाखण्डलं धनुरिवानेक-वर्णधरं कण्ठेन रेखावलयमादधानो गगनाध्वगमनसङ्घातवानितीव रविरथतुर-ङ्गकान्तिभिः कृतपक्षपरिग्रहः परितोऽपि मसृणघनपिञ्छसञ्चिताकृतिरभिराम-दर्शनः शुको निर्जगाम । निर्गत्य च तस्यैव शिखरमारुरोह । तं तथा विलोक्य सपल्लवितकौतुकमहो क एष शुकः, कतमजातिरसौ, कोऽयमद्भुतरसानुबन्धी विलक्षणोऽस्य मूर्द्धन्युद्गमः शिखायाः, कथमेकखण्डेन्दुकान्तशिलानिर्माण-तया नीरन्ध्रसन्धिगर्भेऽत्र चैत्ये प्रवेशनिर्गमावस्य । सा चेयमासीदन्तर्निविष्ट-स्यास्य प्रभानुभावान्नीलता चैत्ये । स्वहृदि भावितेन च प्रगल्भया गिरा गम्भीरसुभगमन्तःकरण एव निसृष्टार्थं पठितमपि नूनमनेनैव । यथा चैष तिर्यग्जातावप्येवमनुत्रासमुस्थितः पतङ्गत्वेऽप्यलोललोचनः पठति च प्राग-ल्भ्यवानेव शिखा चेयमाश्चर्यकारिणी शिरसि तथा नियतमसुना केनाऽपि वस्तुभूतेन भाव्यम् । भविष्यति च महतो भूमिराश्चर्यस्य । तदसौ विधृत्य पार्श्वीकृतः परमविनोदार्थमुपकरणं भवितुमर्हत्येव निष्कण्टकीकृताशे-षभूवलयनिराकुलस्य राज्ञः । किन्तु कथं मे करगोचरीभविष्यति येन त्रिभुव-नेऽप्यदृष्टमश्रुतं च कौतुकरसैकपात्रममुं समर्प्य प्रसादयामि स्वामिनमिति मदीयचिन्तानन्तरमेवाऽसौ ततः शिखरादधो निरीक्ष्य झटिति दत्तझम्पस्त-त्रैव मूलमणिपीठकुट्टिमे समं धरिमविभ्रमं भ्रमितुमारेभे । तथा पर्यटन्नसौ सर-भसमुद्भूताशेन ग्रहाय मया तस्य दृशोरविषयं प्रदेशमाश्रित्य निभृतमवनमि-तगात्रमलक्षितपदप्रचारं च गत्वा झगित्येवोपरि त्वरितपातितेन पाणिना ध्रिय-माणो झटित्युड्डीनवानुड्डीय च पुरस्तात्क्रोशमात्रेण मार्ग एवोपविष्टो विसं-कटस्य वटशाखिनः शिरसि । अथाऽहमुड्डीने तस्मिन्नुड्डीनचित्त इवाकुलो नितान्तमाः ! कथमिदं पक्षिरत्नमासादयिष्यामि । करग्रहमागतोऽपि पश्यत एवमेव पुरस्ताद्गतः शकुन्तोऽयमिदानीं किन्नाम स्वामिनो निवेदयामि किं

धूतोऽप्युड्डीय गतवानिति हा धिङ्मे पापस्य पुरुषव्रतमवश्यमेतस्य पृष्ठानुलग्नस्तत्र यामि यत्रासौ व्रजति। यदि तावदिहैव वटशाखिन्यास्थितो धृतस्तदा धृत एव न चेदितोऽप्युत्पत्य यास्यति ततो नाम निरालम्बने व्योमनि वहन्नेव वासरमशेषं नेष्यति। तथाऽपि स्वप्रतिभासात्सङ्गतिरसाचारलोभात्परिश्रमाद्वा क्वचिदवस्थास्यति। तदित्थमविषण्णेन मनसा कृतानुबन्धे ग्रहीष्यामि निश्चितममुं विहङ्गसारमित्यवधार्य धावितस्तं प्रति पादपं न्यग्रोधम्। न च यावदेकस्य पदस्यान्तरेण तं तरुतिलकमासादयामि तावत्ततो झगित्यसावुड्डीय नभसि वोढुमारब्धवान्। अहमपि वस्तुलोभाल्लङ्घितविवेकस्तस्मिन्नेवाधाय दृष्टिमाविष्टेन चेतसा मार्गामार्गमगणयन्सवेगमत्रोपविशत्यत्रोपविशतीत्याशया प्रधावितुमुर्वीपथेन लग्नः। सोऽपि तथा व्रजन् क्वचिदुपविशत्येव न क्वचित् चरणस्पर्शमात्रमुपविशति क्वचिदुपविष्टमात्र एवोत्पतति, क्वचिन्मे निकटीभूतस्य सञ्चलनमाकलय्य चकितः पलायते, क्वचित्करसङ्ग्रहं यावदागतोऽपि विच्यवत इत्येवममुना क्रमेण तेन पक्षिणा कदर्थ्यमानस्य प्रधावतो मे झगित्येकत्र दुरन्तारण्ये गहने घनतरुशिखरशाखान्तरशतैरन्तर्यमाणः स खलु दृष्टेरगोचरो बभूव। अथाऽहं तथाप्याशया विडम्बितः सर्वतो विलोकयन्नग्रतो दृष्टामरुणकुसुमकलिकामपि तच्चञ्चुरिति सरभसमनुसरामि, हरितफलगुलिकामालोक्य तन्मौलिधिया धृतिं बध्नामि, प्रचलति विनीलतरुदलेपि तत्पक्षतिप्रतीतिमाचरामि, विकटार्कफलकोशदर्शनात्तदङ्गमेतदिति विकल्पयामि, झटित्युड्डीनान्यशकुनिपक्षपुटफटत्कारेण तस्योत्पतनमाशङ्क्य चात्मानमनेकशो नटयामीत्येवमदृश्यमानेऽपि तस्मिन् सदृक्षदर्शनोद्भूतभ्रमेण धावन् भूयसीं भूमिमतिक्रान्तवान्। अनन्तरमन्ते च विपिनस्य प्रकाशमागतेषु ककुभां मुखेषु खण्डिताशो गतः स तावत्पत्री, तदितो वलामि पुनरग्रतो वा यामि, किमन्यमन्वेषणोपायमासूत्रयामीति समुचितानुष्ठानमूढो मनाङ्न्यञ्चितेन चेतसा समत्सरमितस्ततः सलवलन्नेकहेलयैव पुरस्तान्नातिदूरमविरलतरुसरलवेणिकान्तरितमनेकारावबहलं विहङ्गकोलाहलमशृणवम्। तदाकर्ण्य पुनरुन्मीलिताशो नन्विमामेतावतीं भूमिमतिश्रमार्तोऽपि व्रजामि। मा पुनरिह विहङ्गसङ्गतिरसादवस्थितोऽसौ भविष्यतीति सञ्चिन्त्य सत्वरश्चलितो यावत्तां तरुश्रेणिमासादयामि तावदग्रे तेनैव पुलिनतलमिलितसकलजलशकुन्तकेलिकूजितरवेण निवेद्यमानां गरिमगणनोपस्थितस्य प्रथमरेखामिव पश्चिमसमुद्रस्य, समुद्रमथनोत्थितस्य निस्सारमरणिमिवामृतरसस्य, सलिलसञ्चारसारणीमिव भारतक्षेत्रस्य,

विलासपट्टिकामिव दक्षिणदिशोऽञ्चलस्य, लावण्यपद्धतिमिव धरायाः, तीरच-रसमीरणारणितसणबीजकोशिकाचक्रवालवाचालपालिभिः क्षेत्रैरुभयतोरम्या-मसमशरनिवासनिर्भराविरलतरुनिकुञ्जराजिभिरभिराममरोधसमसीमप्रसरां भगवतस्तिग्मत्विषो दुहितरं नामतिप्रसिद्धनामवतीं तापीतिमहासरितमद्राक्षम् ।

देवी भानुमतः सुतेयमनया मुक्तामणिस्वच्छया
कृत्वा तं प्रतिबोध्य चण्डमहसं कुर्मः स्वरक्षामिति ।
ध्वान्तैर्या पुलिनोपरूढविटपानम्रप्रवालस्फुट-
त्पुष्पामोदमधुव्रताकृतिधरैः कृता समासेव्यते ॥

अपि च ।

या महासिन्धुकृष्णांशुप्रसूताप्येतदद्भुतम् ।
सदृशी हन्त शीतांशोः शैत्येन पयसामभूत् ॥

दृष्ट्वा च तां सविस्मयं आः! सुदूरमागतोऽस्मि नन्दावटपुरादियं भगवती दशभिर्योजनैराख्यायते सिन्धुरहो मे प्रवृत्तिराग्रहस्य भवतु किमनेन प्रस्तुतं तमेव गवेषयामि तावदित्युभयतीरवर्तिषु तत्र घनपत्त्रिणां पेटकेषु निपुणं निक्षिप्य चक्षुरालोक्यमानोऽपि समन्तान्नसन्कापि दृष्टः शकुनिरितश्च भगवान्भुवनैकचक्षुरादित्यः संवृत्य दिवसविस्तारमपरस्यां दिशि प्रयातवान् । अथ तथा वृथागते क्लेशेऽहमुन्मुच्य सरलं विषादसूत्कारमन्तःकरण एवं भावितवान् । हा ! कष्टमविमृष्टेन पथाऽद्य मया क्लेशितोऽयमात्मा । यद्वा साध्यमसाध्यं च विषयमनालोच्य विचरतां विफलीभवत्येव पुंसां प्रयासस्तदेतदतिमहीयसो मोहस्य विलसितं यस्मादेवमुत्पद्यते विवेकिनामप्येकहेलयैव परिभ्रंशो मतेः ।

अन्यथा किमयमीदृशी न मे संवित्तिर्यत्किलासौ पक्षी, पक्षिणस्तु खेचरीभवन्ति, खेचरा हि न कुतश्चिदुपायादृते क्षितिचराणामगोचरा एव, तावत्सन्दिग्धसिद्धिः प्रथममेव पाशकादिसदुपायः परिहृतः । पुनश्चैत्यान्तिकादुड्डीय निर्गते तस्मिन् किमिति मे पृष्ठलग्नस्यामुना संरम्भेण कुतश्चिन्निष्फलतया लोकेषु कथ्यमानोऽप्यसौ व्रीडाकरो व्यतिकरः । किमन्यदात्मनोऽपि लज्जितोऽस्मि । तदस्तु यद्वृत्तं वृत्तमेव । ततः संप्रत्ययपरमालोच्यते यन्न तावदिह मन्ये ग्रामटिका नेदीयसी काचिदन्तिमश्चायमञ्चलो दिनस्य । निशाप्यन्धकारवती । बाढमविदितश्चैव विभागो मार्गस्य । निस्सखश्चाहम् । अवेला च पान्थजनोपलब्धेस्तदत्रैव कुत्रापि सवासरशेषामिमां निशामतिवाहयामीति निश्चित्य सर्वतो भालयन्स-

मन्थरप्रचारमुच्चलितस्तस्यैव रोधसः शिरसि प्रवृत्तं पन्थानमनुसृत्य वामतो नातिदूरवर्तिन्येकत्र नवदलविनीलयवनकपट्टिकावलयमण्डलिते विलूय पुञ्जित-व्रीहिणि क्षेत्रखलके झटिति दृष्टमुत्कृष्टं कुटीरमपत्वरेण चेतसा सहर्षमाश्रितोऽ-स्मि। तच्चान्तरमानुषमेकत्र कृतपलालसंस्तारमन्यत्र विक्षिप्तकालिङ्गपुञ्जमपरत्र च खण्डभाण्डकोद्भासितैः चुल्लकमालोक्य नन्वेवमिह संवृत्तिश्चेद्वश्यमास्ते कश्चि-दतः स यावदायाति तावद्बहिरेव तिष्ठामीति चिन्तासन्नसमयमाजगाम परमे-कतो मानुषाकृतिः श्वापदपशुरश्रृङ्गपुच्छोऽलङ्गान् दिवसद्वयो भूतविशेषश्चैत-न्यवानुपलपुत्रकः परुषहलमुखविपाटितया पृथिव्या प्रदत्तशाप इव स्फुटिताग्रच-रणस्तृणकुलानि गोरूपकैश्चारयत्यविरतमन्नाविति क्रोधान्मारुतविलग्नैः शालिम-लनोच्छलितपलालदलशकलकैर्गृहीत इव कूर्चकेशेषु हरिद्राफलाष्ठीलगुलि-काभिरिव लाङ्गलकुशकुठारीकलनकिणग्रन्थिभिः स्थपुटितकठोरकरतलो मस्त-काहितचारिभारकः स्थूलया च दर्भवलितया रज्ज्वा बनद्धपरिधानः स्कन्धीकृत-जरत्कम्बलीखण्डो दण्डपाणिः पामरः। पश्यामि च तदन्तिके वामकरगृहीतम-विपुलपलाशतरुवल्कचीरिकयावनद्धचरणं तमेव परमुत्तमं पतत्रिणां कीरम्। आलोकिते च तस्मिन् मृतोज्जीवित इवाहमानन्देन विकसितविलोचनो विशा-लया पुलकसम्पदा परीतमूर्तिरन्य एव संभूतवान्। अथासौ पामरः प्राङ्गणक एवोत्तार्य प्रवेश्य चान्तश्चारिभारकं तत्रैव वन्धनरज्जुवलये तमप्याबध्य विहङ्ग-पुङ्गवमागत्य ममांतिके स्कन्धादाकृष्य कम्बलिमुपाविशत्। लग्नश्च सदन्तनिष्कर्षं द्वाभ्यामपि कराभ्यां शिरः कण्डूयितुं तथा श्रान्तः! कुतो ग्रामादागतोऽसीति मां पृच्छत्यन्तरा शिरःकण्डूयनसुखासिकासीत्कारमुन्मुचत्यन्तरा क्षेत्रे विशंति गोरूपकाणि हक्कयत्यन्तरा पुनरग्रे गृहीतमुक्तेन वचसा तमेव प्रश्नालापं निर्वा-हयतीत्येवमज्ञतया ग्रामेयकस्वभावतया वा मन्मनः कदर्थितवान्। अहमप्यहो सेयमधुना पामरावधीरिका नाम भवतु। व्यर्थपरिणामया किमस्य वा स्वल्प-चिन्तया, तावद्भावयामि स्वकीयं कार्यमुपश्लोकनैकगम्या ग्राम्यजातिरिति व्यापाराकारवर्णनापूर्वमनुकूलाभिरुक्तिभिरमुं प्रसाद्य सुखसमाह्लादितामत्र वसतिं करोमि, तथावस्थितश्च पश्चादस्मिन्पतत्रिणि किमयमाचरतीति पश्यामि, पृच्छामि च शुकस्य लाभान्वयमस्य च प्रवृत्तिं, गृह्णामि चैनमे-तस्मादुपायैर्दैवतोऽहृतमेव लब्धं शुकराजमिति विनिश्चित्य तथाहृदयस्ख-लितधिक्कारयुक्तैरावर्जनवचोभिरवस्थानदानाय तं प्रवर्तितवानस्मि। सोऽपि मे प्रसन्नमनोवृत्तिरवस्थितिं दत्वा संवृत्तायां रासभाश्रयोचितमौचित्यचि-

त्यमुपदर्शयन्नुपकोणवर्तिनीं प्रस्तरपलालपिण्डितामाकृष्य च स्थालीमाग्रहाद्वासितान्निकया करम्बितेन यवनलकमहोदनेन तत्समयेन भृष्टेन चोष्णेन कालिङ्गशाकलिकाशाकेन कृतगौरवमातिथ्यमकरोत्। दिनबुभुक्षितश्चाहं तद्धि गोपालहालिकीयं भोज्यममृतमयाहारनिर्विशिष्टमिवोपभुज्य मृदुनि नवकलमपलालतल्पे तेनोक्तः स्थितिमकार्षम्। पामरोऽपि तथैव स्वयमुपभुज्य मदासन्नविरचितान्यसंस्तरे सलीलमुपविष्टः शुककृते कर्तुं पञ्जरकमारेभे। मया हि लब्धावसरेण सानुबन्धमसावभिधातुमारब्धो यथा। भोः! चातुर्धुरिक! कमभिनिवससि ग्रामम्?, किमभिधानोऽसि?, क्वाऽसौ कथं च भवता शुको धृतः सङ्गृहीतश्च किमर्थं?, किञ्च श्रीमतानुपकरणेनामुना किं करिष्यति भवान्?। यदि न कुप्यसि कुलप्रधान! ततो भणाम्युपकारेण महता प्रयच्छ मे शुकमिमं राज्ञो दर्शयामि। तेन च कृत्वा तवावश्यमनल्पं दापयामि प्रसादं कारयामि च भवन्तमखिलस्यापि मान्यमिति मद्वचो निशम्य पञ्जरकसृष्टौ निविष्टदृष्टिरपश्यन्नेव मां पामरः प्रत्युवाच।

श्रूयतामिहास्ति परतो धान्यसारनामा ग्रामः। तस्मिन्नधिवसति गोपतिर्नाम कुटुम्बिकस्तस्याहमात्मज इव संवरको नाम हालिकः कलमशालिमलनाय जनितमहाखलोऽत्र क्षेत्रे वसामि। चारिग्रहणाय चाद्य नातिदूरमितोऽर्द्धविलूनशालिमतः केदारस्य तीरं गतेन मया शालिकणिशस्योपरि निविष्टो दृष्टः शुकोऽयमालोक्य च सहर्षमहो साधु चिराद्दृष्टोऽयमिति यष्टिकाग्रयोगिन्यायासिकया परुषतुषपुटक्रोडात्तण्डुलविकर्षणासक्तिपरतन्त्रो झटित्यसौ संवृत्य स्वीकृतः। न चात्र त्वयाऽनुबन्धो विधेयः। मम हि प्राणाधिकाऽस्ति कुलशीलसौरूप्यवती कान्ता। सा च संप्रत्यमितोपयाचितशतैः प्रथमगर्भेणान्तर्वत्नी जाता। गता चात्मनः कुलगृहे प्रसवितुमपरं मेखलिकानामग्रामम्। तस्याः शुकामिषोत्पन्नदोहदायाः कृते सङ्गृहीतः शुकोऽयम्। अतो मे प्रेयसा कलत्रेणैव विभूतिमतः किमनेन त्रैलोक्यराज्यमपि तृणकल्पमेवैतत्तदलमनुप्रार्थनयेत्यभिधाय निष्पाद्य च तं तृणलतामयं पञ्जरकं विधाय च तदन्तःप्रवेशेन सुस्थितं कीरमुत्पन्नतोषः कृतकृत्य इव शयनसन्निवेशेन स्थितवान्। तथा स्थिते च तस्मिन्नुद्भूतभूरिचिन्तोऽहमाः! कमुपायमिदानीमासूत्रयामि किमन्यमर्थनोपरोधविशेषमुपदर्शयामि, किमितो हठादुल्लङ्घ्य च गृह्णामि आहोस्विदकथयन्नेवास्य सुप्तस्यापहृत्य यामीत्यादि नितान्तमुत्ताम्यता चित्तेन चिन्तयन्

यावन्मुहूर्तं तिष्ठामि तावज्झगित्येवाऽसौ शुकः साट्टहासं विहस्य प्रस्तुतेनार्थेन युगलमार्यायाः पपाठ—

एकेन म्रियमाणः पलायितोऽन्यस्य गोचरे पतितः ।
गतोऽन्यस्य मुखे किल यदहमहो बलवती नियतिः ॥

अथवा—

जीविताद्विषयान्मृत्युं मृत्युमुखाज्जीवितं च नियमेन ।
जनमानयति नयत्यपि विरमति न क्वाप्यसौ नियतिः ॥

अथाऽसौ निशम्य परमेकहेलयैव तयोद्धर्षितरोमा पामरो विमुच्य महतीमारादित्युत्थाय पलायितुमारब्धः । मा भैर्मा भैरित्युद्भूतहासेन च मया म्रियमाणः साकुलमहो विमुञ्च विमुञ्च मां त्वमपि सत्वरमितो भ्रातरपसर्प वायसे न यावदेतेन पत्रिणा यतो न मया क्वचिदियन्तं कालमेते हसन्तो वदन्तश्च शकुनयो दृष्टाः । तदेष यास्यामि । चारभटस्तु तिष्ठतु भवानिति भयार्त्तिविधुरेण चेतसा प्रलपन्नुन्मोच्य मदन्तिकादात्मानं पलाय्य गतवान् । अहमप्यनुकूलवर्त्तिनो विधेरनुभावात्फलितप्रयोजनो ननु सिद्धमभिमतं साध्यमिदानीं प्रत्यूष एवोत्थाय शुकसनाथो व्रजामि मन्दिरमिति महता प्रहर्षेण तथा भावितत्त्वस्य पत्रिणो विस्मयेन तेन च तस्य हास्यरसेन हालिकस्य विनोद्यमानहृदयो निद्रामलभमानश्च किल तत्कालमेव जल्पयिष्यामि तं शुकं तावत्तेनैव सानुरोधमाभाषितोऽस्मि भो महात्मन् ! अवधानमभ्यर्थ्यसे, ब्रवीमि किञ्चित्तावदितः पामरमहाग्रहाद्विच्युतोऽहमिदानीं पृच्छामि भवतोऽपि कीदृशी प्रवृत्तिः । त्वं हि महात्मस्वरूपः, महात्मा हि प्रोच्यमानः शृणोति ? उपरुध्यमानः प्रवर्तते, तथाऽर्थ्यमानो ददाति च । तदेतदुच्यसे भ्रातः ! अमुष्यासारपरिकरस्य संसारस्य सारो धर्म एव । धर्मस्य च सारभूता प्राणिषु दया । दयादानस्य च सारमार्तपरित्राणं नाम । तच्च सज्जनेषु सहजमेव विश्रान्तमास्ते । तदेष प्रार्थ्यसे क्वचिदप्यस्तु तावद्बन्दिग्रह एव । गरीयसी पीडा मा पुनः कस्यापि नृपतेरर्पयिष्यसि । तेन च हृदि प्रतिफलितराजसेवापरिक्लेशभीरुतया नितान्तमार्तोऽस्मि । यतः ।

क्रूरामात्यदृगर्चिविषानलमुखी द्वाःस्थाग्रहुंकारस्वनै-
रुत्फेत्कारवती नियोगिरसनोत्तीव्रस्फुरत्कर्तिका ।
बिभ्राणा च विशुष्कसेवकलसत्कङ्कालमौर्वीपति-
मेषा राक्षसपुत्रिकेव कमहो जीवन्तमुन्मुञ्चति ॥

तत्खलु विमुञ्च मां धीमन्नव मां वाचा च शुद्धोऽसि चेन्मा विघटय विहङ्गमकुटुम्बात्। मा दूरीकुरु निकुञ्जतरुकोटरकुटीरवासात्। मा वियोजय यदृच्छारामफलरसोपभोगात्। मा विश्लेषय विविधवनसरणिसञ्चारसौख्यात्। मा समुत्सारय नभस्तलोत्पतनविलासविभवादनाथमार्तं पतत्रिमात्र-मित्युपरोधबन्धुरमभिधाय व्यरंसीत्। अनन्तरमुत्पन्नविकल्पोऽहं अहो! कोऽप्यसावित्थं प्रगल्भः शुकविशेष इति न जाने। किन्तु यथाऽहममुना स्वार्थमनुसन्दधानेन सप्रबोधसंरम्भममिहितस्तथाऽहमपि करोमि यदि हृदयं दयार्द्रं मनसा च प्रवृत्तिप्रश्नगर्भेण गिरां विस्तरेणोत्तरं कल्पयामि। ततोऽयमुक्तिप्रकारचतुरस्तथा कथञ्चिदालापचर्चां विपञ्चयिष्यति येन मे झगिति भविष्यत्येव मोक्तव्यस्तदस्तु स्वामिनः समर्पणीयोऽयमित्यादावेव सूत्रितं प्रयोजनमनाशयेन यत्किञ्चिदुक्त्वा गृहीत्वा च याम्येलमन्वयादिस्वरूपमेतस्य स्वामिनैव पृच्छयमानमवगमिष्यामीति संप्रधार्य तथा प्रत्युत्तराभासमात्रकेण तमनुवर्त्य तूष्णीमतिष्ठम्। अथ तथैव मे जाग्रत एव शुकवचोऽवत्रासस्खलिताच्छलयितुं हालिकानुपृष्ठलग्ना प्रकीर्णतिमिरकेशा पिशाचीव गता सा नाम यामिनी। प्रविष्टश्च कर्णयोर्निशोपान्तमुक्तस्य चरितुमायातवतो द्विपीकदम्बकस्य कण्ठावलम्बितो नाम नवग्रहीभूतः शुकोऽयमादाय गम्यतामित्यदृष्टोपदेश इव क्वणत्काष्ठघण्टावलीनानारवः। तमाकर्ण्य नन्वसावेव समयः प्रयातुमिति प्रतोषसत्वरमुत्थाय गृहीत्वा च तं शुकं निर्गतोऽस्मि तस्मादागतश्च सकलेनाह्ना तदेव नगरम्। नगरप्रवेशे च मदन्वेषणविमूढस्य झटित्युद्भूतदर्शनप्रहर्षेणागत्य मिलितस्य परिजनस्य हस्ते समर्प्य पञ्जरकमाख्यातवृत्तान्तः सद्मनि प्राविशम्। तत्र च स्वामिनो दर्शयितुमाश्चर्यकरं शकुन्तमुत्सुकोऽहमन्यस्मिन्मणिफलकपञ्जरे कृत्वा तमतिवाह्य तां निशामायातवान्। अवाप्तोऽस्मि चाद्य न खल्विदमीदृशं विहङ्गरत्नमवनिमण्डलाभरणस्य राज्ञो निधानीकृतं शोभते इति भवनमगच्छन्नेवात्र तमादाय समागतस्तदेष बहिरानीतो दारकस्य करे तिष्ठतीति विज्ञप्ते देवस्य मनः प्रमाणमित्युक्त्वा व्यरमत्। राजा च सविस्मयोत्सेकमुत्सुकेन मनसा ननु त्वरितमानीयतां, दृश्यतामसौ शकुन्त इत्युक्तवान्। उक्ते च भूभृता कौतुकतरङ्गितं मनः प्रभोराकलय्य वसन्तशीलः स्वयमुत्थाय जवादानीतमग्रतो रत्नपञ्जरमधिष्ठितं शुकममुञ्चत्। अथाऽसौ सरभसमुन्नमितकन्धरः प्रसन्नया दृशा निरूप्य

देव ! हरनयनहुताशनशिखाभिराघ्रातेन कुसुमधन्वना समुज्झितं रूपम-हल्याभिशरणवाच्यताविषण्णेन शतमन्युना शिथिलितं विलासमुरगतल्पाधारवारिणि पयोनिधौ शयनसुखव्यसनलङ्घितेन च मुरारिणा निरस्तं व्यापारमपौरुषया गत्या गृहीतमिवाधिष्ठितस्य ते किमङ्ग ! किल स्तौमि । तद्भवतु । किमत्रोपश्लोकनक्लेशेन । किन्तु किमप्युच्यसे न चेत्कुप्यसीति भूमीन्द्रमवादीत् ।

वृत्तिः संप्रति कार्पणी च किमपि त्यागप्रवीरे दृढं
विश्रान्ता त्वयि नाथ येन भवता ब्रह्माण्डनामा घटः ।
सद्यः सद्गुणरत्नराशिभिरसौ भृत्वा निधानीकृतः
काऽन्यत्रोपरि विस्फुरत्यनिभृतं ज्योतिःप्रतापस्तव ॥

राजा तु सविस्मयस्मेरमारोप्य समीपवर्तामाननेषु नलिनदलविशालां दृशं अहो ! पश्यत वर्णनार्थैकगर्भि भणितिभङ्गिवैदग्ध्यप्रागल्भ्यमस्येति निभृतमभिधाय तं शुकं शकुन्तपुङ्गवमवोचत् । हंहो ! विहङ्गमप्रवर ! प्रथय कः किल भवान्, कतमजातिरसि ? । कथं च वस्तुविवेचनावच्छिन्ने चेतसि वर्णशून्याविस्पष्टशब्दमात्रोच्चारकारिण्यस्मिन्विहङ्गमत्वे तवाऽयमीदृग्विधोऽवगमः समग्रस्य भारतीपरिस्पन्दस्य तावन्न च स्वजातिलक्षणां शिखामावहतः स्वरूपमेवाश्चर्यकारि, पुनरियमपरा च प्रस्तुतोपश्लोकनालापवैदग्धी । कथं नु तव तादृशि निस्सन्धिरन्ध्रोदरे प्रवेशो निर्गमश्च चैत्ये किमर्थमधिविष्टोऽसि ! । तद्गतेन च भवता किमित्येतदापठितम् ? । कथं च पलायितो वसन्तशीलादशक्यबन्धनश्छलितो हालिकेनेत्यादि पृष्टो नरेश्वरेण सोऽब्रवीत् । देव ! किल येन चेतसा देवः पृच्छति न स कश्चित्तवेह महाहिदुर्गमायां सह्यगिरितटान्तर्वर्तिन्यामजनप्रचारदारुणायामरण्यभुवि पुराणस्य न्यग्रोधविटपिनः कोटरे वसन्त्यामुद्भूतप्रभूतापन्नसंपत्तया ( सत्त्वया ? ) प्रसवनिर्विण्णायां शुकपतत्रिण्यां पश्चिमे वयसि संभूतवान् । पिच्छोद्भेदकाले च शुकान्वयविरोधिनी न जाने कुतोऽपि हेतोर्झगिति परमुद्गता शिखेयम् । इमामुदीक्ष्य शिरस्युद्भिद्यमानां विलक्षणतया स्वरूपस्य परिहृतोऽहमम्बयाऽपि शकुन्तकुटुम्बेन च पुराकृतैः कर्मभिरनुभावितश्च भूयांसं क्लेशमिति तत्रैव विपिने वसन्ती स्वीचकार कृपावशेन मां शारदी नाम वनदेवता । तया च प्रतिदिनमनुपाल्यमानोऽहमुद्भूतपक्षतया समर्थीभूतश्चलितुम् । इयं च शिखा दिवसैर्यथा समुच्छ्रयमापद्यते तथा क्रमेण तादृक्चैतन्यमुन्मीलितं येन स्वयमाविर्भूतप्रबोधः समस्तवस्तुतत्त्वोपनिर्णयेषु सर्वेषु शास्त्रेषु

विविधासु काव्यप्रकल्पनासु पुराणकथोत्कीर्तनादिषु वैदग्ध्यमधुरासु च विस्रमालापगोष्ठीषु मनुष्यशेमुष्यङ्कतया परमं प्रागल्भ्यमासादितवानस्मि । प्रासप्रमाणं च मां शारदी वत्स विहर स्वेच्छया मत्प्रभावादगम्येषु विषयेषु प्रचारसामर्थ्यमरन्ध्रसन्धिषु स्थानेषु च प्रवेशशक्तिरखण्डिता भवतो भविष्यतीति वरं दत्वा कृत्वा च चित्रशिख इति सुललितं नाम स्वतन्त्रचारेण विसृज्य निवृत्ता बभूव । अथ ततःप्रभृत्यनया विलक्षणया मूर्त्या द्वेषीव दृष्टमात्रोऽपि महारासपदीभूतः शुकानामलब्धस्वजातिसङ्गतिरेकाकी सर्वतो वनान्तरेषु वृक्षान्तरेषु कोटरान्तरेषु च विचरन्नियन्तं कालमतिष्ठम् । सत्यप्येवमेतावति सकलतत्वनिर्णयोन्मेषशालिनि विवेके न खलु क्षणमपि सजातित्वादुज्झितुं पारयामि शुकानां सङ्गमं दर्शनमास्पदं चेति प्रातरेवाद्य प्रत्यग्रशरत्समयसम्मदोल्लसितचेतसां क्वापि गगने गन्तुमारब्धवतां शुकविहङ्गमानां पृष्ठलग्नस्तां तावतीं भूमिमायातवानस्मि । तत्र च कथञ्चन मुन्निवेशेन पश्चाद्वलितनेत्रतया झटिति दृष्टोऽहं तैरतिघनया क्रुधा प्रधावितैरुच्चण्डचञ्चुपुटकोटिपातमाहन्यमानस्त्रासेन सहसा पलाय्य तस्मिन् सन्धिरन्ध्रोदरेऽपि चैत्यप्रवेशतरलितस्तेन शारदीवचःप्रभावेण सङ्क्रान्तवानस्मि । तथा समुपस्थितापद्वशादुत्पन्नमनोव्यथः विभावयन्नात्मन्यमुं समग्रगुणाविर्भावजनकं शिखोन्मेषमिमं श्लोकमपठम् ।

गतेषु च तदन्तः प्रवेष्टुमशक्तेषु यथागतं तेषु यथाऽहमुत्त्रासितोऽपि तद्दर्शनवियोगजं दुःखमसहमानो ननु कियद्दूरे ते किल वर्तन्त इति विलोकनाय निर्गत्य तस्यैव शिखरमारूढोऽस्मि । अदृष्टशुकावलिश्च हा क्व पुनस्तां स्वजातिमालोकयिष्यामीत्यनया तिरस्कृतविवेकश्चिन्तया मूले विमलमणिपीठकुट्टिमतलैकसङ्क्रान्तमालोक्य निजं प्रतिबिम्बमये मज्जातिरपरः कोऽप्यसावत्र शुक इति भ्रान्त्या झगिति कृतझम्पमवतीर्य तदनुगामी भ्रमन्नमुना ध्रियमाणः पलायितवान् । अनुपृष्ठलग्नेन च खेद्यमानोदितबुभुक्षितः क्षेत्रं शालेयमासाद्य क्षुधान्वितेन चक्षुषा चेतसा च विधुरीभूतश्चरन्नधिप्रासो महतीं पामरकरग्रहापदं, प्रवेशितश्चात्र वार्त्ताभिरेव श्रूयमाणस्य मध्ये पञ्जरकस्य, दैवेन पामराकृतेः कृतान्तदूतादाकृष्य त्वत्समीपमानीतः । इदानीमुदीक्ष्य दूरादनन्यतुल्याकृतिं भवन्तमये स एष मानवः स्वामी यः किल सौराज्यरञ्जितेन शारदीप्रमुखेण वनदेवताजनेन प्रतिदिवसमाशीर्वाद्यमानो मया श्रुत इति प्रमोदरसमिश्रितं भवद्दर्शनामृतमवाप्य स्वस्थतेयमेवं शरीरकस्य । तन्मे स्वामिन्नसमक्लेशपरि-

पाटिघटनापटीयानेष परिणामः कर्मणां, यतः सुदूरमम्बरपथप्रचारिणः पवन-तरलितनिजाङ्गपिच्छशिखरेऽपि विस्फुरति । बाढमविश्रम्भशीलाः पक्षिणः कथमुपगच्छन्ति गोचरं भूधरकरग्रहाणाम् । तदङ्ग ! कर्मस्वामिनाध्यासिते ऽस्मिन् संसारनगरे नियतमात्मानमेव प्रस्खलितस्य मनसोऽनुशासकमपहाय न खलु कोऽपि केनाऽपि बध्यते । तथा हि—

आत्मा शुभाशुभमयं धनमेष हृत्वा
योन्यन्तरेष्वपि निविश्य तिरोदधातु ।
अन्विष्य नूनमचिरादनुमार्गलग्नै-
राबध्यतेऽत्र सुखदुःखशतैस्तथाऽपि ॥

किन्त्वेतदेव मे किमप्याविर्बभूव शुभकृतं कर्म येन स्वामिन्नशेषनरलोक-तिलको विवेकिनामग्रणीरालोकितो भवानिति प्रगल्भभणितिभङ्गीमनुत्तरा-मभिधाय तूष्णीमभूत् ।

राजाप्यहो ! साधु साध्वकृतं पक्षिरत्नमासादितमित्यत्यन्तमेव प्रहृष्य भोः पतत्रिणां पुङ्गव ! कस्य मनस्येवं न संवसति यत्किल शकुन्तजन्म नाम सावमानसङ्गमो विप्रयोगः स्वजातेरिच्छासंचरणरतिहरेयमवस्थितिः पञ्जरस्य, स्वभिलाषप्रवर्तनोच्छेदकं चेदमपरैः प्रदानमाहारादेः प्रकामं क्लेशयत्येव चेतसि, किन्तु नापरपतत्रितुल्यस्तादृशो भवान् । भवतो हि दुष्कृतेन कर्मणा जन्मैव केवलमिह विहङ्गजातावभूत् । अनेन पुनः सकलसंस्कारवता चैतन्येन किमु-च्यते मनुष्याणां मरुतामपि शेमुषीमतिक्रामसि । तत्किमेवं धीमन्नुत्ताम्यसि । मा विषीद, पूरयिष्यामि यथाऽवसरमवश्यं भवतो वाञ्छितं सुखम् । असा-वपि बिडालादिव्यपायपरिहारार्थमित्थमेवाऽस्तु निवासः । पञ्जरके वसतश्च तवाऽत्र कालेन भविष्यत्यस्मदीयाऽपि संगतिरित्यादिभिरनेकधा प्रबोध्य तं चित्रशिखं तत्रैव सुस्थितस्वान्तमकरोत् । समर्पयामास च वसन्तशीलस्य । भो वनपालपुङ्गव ! त्वयैव प्रतिदिनमुद्यानमणिमण्डपस्थो यथोचिताहारपाना-दिभिरसौ पालनीयः । सरसगोष्ठीप्रसङ्गेषु चाऽस्माकमनुज्ञातासन्नवृत्तिश्चित्र-शिखो विधेय इति यावद् वसन्तशीलमादिशन्नास्ते तावज्झगित्युदयास्तभूभृ-तोरन्तरालभूमेराघाटकल्पनाचिह्नमिव रविबिम्बमम्बरस्य मध्ये सम्यग्भूतमिति प्रतीतिहुङ्कारमिव मुञ्चन्नुदञ्चितेन ध्वनिना ननाद मध्याह्नसमयशंसी शङ्खः ।

तमाकर्ण्य यथोपस्थितं पालयितुमवसरमुचितवेदी परमपारितोषिक-

प्रदानेन सन्मान्य वसन्तशीलं तेन च हस्तीकृतरत्नपञ्जरकं चित्रशिखं विसृज्य विसर्जिताशेषनरपाललोकः स्नानादिकर्म पौर्वाह्णिकं कर्तुमुदस्थादास्थानसिंहासनान्नृपतिः ।

अथोत्थिते तस्मिन्नवनीश्वरे युगपदहंप्रथमिकाक्षेपेण प्रणम्य निर्गच्छतो नरेन्द्रसन्दोहस्य महीयसा गात्रसङ्घट्टेन हठादन्योन्यमिलितमुकुटमकरीतटोच्छलितैरनेकशो मणिभिः सरत्नोद्गारो वेलाप्रसर इव सागरस्य, विस्रस्तशेखरोड्डीयमानमधुकरस्तम्बैः श्यामलो हलधराकृष्यमाणः प्रवाह इव यमुनाजलस्य, त्रुटितहारदण्डाग्रपातिभिर्मुक्ताफलैरुन्मुक्तजलबिन्दुशिरःप्रचार इव स्वात्यम्भोदपटलस्य, प्रसर्पतो विलासिनीकदम्बकस्य क्वणत्किङ्किणीचक्रवालकलकलैरुत्थितजनारवः पुरक्षोभ इवानङ्गनगरस्य, प्रधावतो निरन्तरमासनदानाधिकारिणो वर्गस्य विपुलभुजलतोत्क्षिप्तघृत्तवेत्रासनैरुदस्तशैलः संरम्भ इव सेतुबन्धस्य, बहुशो मणिस्तम्भेषु सम्मर्दवशादास्फालता विलासिनीजनेन प्रतिबिम्बभावादनूत्थिताया मण्डपश्रियो दीयमानसमालिङ्गनविशेष इव, समन्तादन्तरपसर्पतां सेवकानामुपरितले च मणिपट्टसंचारिभिः प्रतिबिम्बैर्जगत्त्रयमपि सेवाप्रतिष्ठमिवाचक्षाणः, क्षरता प्रत्यग्रवतंसमञ्जरीरजःपूरेण पांसुलीक्रियमाणमणिभूमिकुल्लसिता प्रेङ्खदविरलनेपथ्यपटपल्लवसमीरणेन समुत्थाप्यमानाराजकवती शिरःसिन्दूरपांसुभ्रूलता मन्त्रिचोलाञ्चलसमाजेन भज्यमानरङ्गावलिः, विलसता स्वलङ्कारनारीकरचमरदण्डपातेन विघट्यमानस्फटिकवेदिकोपकोणमाणिक्यभङ्गिः, सभामण्डपादतिनिकुरुम्बतरेण निस्सरत्सु लोकेषु ब्रह्माण्डपुटपिधानमिव विघटितं, पातालमुखमिव मुकुलीभूतं, सृष्टिशालाद्वारमिवोद्घाटितं, त्रिभुवनोदरमिव स्फुटितं, दिग्भित्तिफलकमिवापनीतमिति बहिस्तिष्ठता जनेन पदे पदे सन्दिह्यमानो गृह्यमाणः स्वयं कुर्वता चित्तेन प्रेक्षकाणां प्रतीहाररक्षास्तबकितेन च बन्दितेनोदीर्यमाणजयजयालापकोलाहलकलापेन संभृतो बभूव भूयसा विस्तरेण महानास्थानसंक्षोभः ।

निर्गत्य च नरपतिरास्थानमण्डपादखण्डितावसरवृत्तिरनुत्सुकेन मनसा क्रमशः स्नानादिसमस्तमुचितोपरूढप्रक्रियाविभूतिभिरभ्यवहरणमर्यादमवश्यकरणीयं व्यापारमकार्षीत् । ततश्च—

निर्वर्त्याखिलमस्खलत्परिकरं तत्कर्म पौर्वाह्णिकं
लीलातल्पतले स्थितः परिगतो गोष्ठीसुहृद्भिर्जनैः ।

प्रस्तावोपनतं शुकान्वयमणिं तं शास्त्रजैः शीलयन्
सूक्तैश्चित्रशिखं सुखेन गमयाञ्चक्रे कृती वासरम् ॥

मनुजपतिरथैवं सुस्थितस्वान्तवृत्ति-
र्विविधसुखसमाजं सेवमानो दिनानि ।
नयति कृतविनोदः पत्रिणा तेन शश्व-
ज्जयति वचसि वश्या यस्य सारस्वतश्रीः ॥

इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
शुकलाभो नाम सारस्वतपदाङ्को
द्वितीयोच्छ्वासकः ।

---

## तृतीयोच्छ्वासः ।

एवं च यथासमयमनुभूयमानविविधविभ्रमोपभोगादिसुखसम्पदक्रमेण कालमतिवाहयन्नेकदा विलासमणिभवनवातायनस्थः परिगतः समन्तादरविन्दकर्णिकाकोश इव केसरैः, आभरणनायक इव पर्यन्तरत्नैः, इन्दुरिव तारकैरवनिपालपुत्रैः कविभिः प्रसादचिन्तकजनैश्च लीलयावतिष्ठमानः पुरः पञ्जरोदरसरिकासनोपविष्टमास्पदं प्रणयस्य विविधरसमहिष्ठगोष्ठीविनोदसहचरं सम्भाव्य तरलितारविन्दसोदरया दृशा तं शकुन्तकुलभूषणेन्द्रनीलं चित्रशिखमुवाच । सखे ! स्वमतिगुणगरिमप्राग्भारनमितबृहस्पतिप्रज्ञेन नियतमेवाऽऽर्येण मन्त्रिणा विभूतिवर्द्धनेन मतिकरेणुकवलिताङ्कुरो निरुत्थानीभूतः परिपन्थिनां वंशः, प्रभूतगुणसूत्रितमिच्छया वर्तते भूपालवृन्दं, नयनपथप्रवर्तितमविसंष्ठुलं वहति वसुमतीचक्रं, उपक्रान्तमन्त्रावकृष्टा वशीभूता लक्ष्मीः, राजधर्मपरिपालितया तया निराकुलीभूतं च मे राज्यम् । एवं च निर्वृत्ताखिलविधेयार्थसुस्थतया कोशान्तः प्रविश्य तिष्ठति कृपाणे रणकेलिदुःस्थितेवास्मिन्भुजदण्डे कथय कमङ्ग ! किल व्यापारमुपशीलयामि, कैर्वा विनोदविभ्रमैरतिवाहयामि दिवसान्, कतमं च व्यासङ्गमनुगम्य हृदयमनुकूलयामीति पृष्टो नृपेण चित्रशिखः स्वामिनोऽनुवर्तयन्नाशयं जगाद ।

देव ! अत्र मनुष्यजन्मनि कल्याणवतामखिलसुखोपभोग एव पर्यवसायो व्यापारः, तदास्पदं च घटयन्ती हृदयवाञ्छितमसौ राज्यलक्ष्मीर्मूलमस्याश्च ससार्णवतरङ्गमालाभरणेयमुर्वी ।

हेतुरप्यमुष्याः स्फुरितनिशितासिकणिशनिर्मितनररुण्डताण्डवोड्डामरसमीकच्छेदः प्रद्वेषिवंशस्य । तदेतत्किं न कृतं देवेन । भूवलयमधुपटले राज्यसुखरसाय कृत एवायमुच्छेदः क्षुद्राणाम्, अपनीता हि विलसदसिदण्डदलितवीरकवचकालायसोल्लसितविपुलविस्फुलिङ्गशिखिस्वेदेन भुजयोरुद्धताः कदनकेलिकण्डूतयः, क्षुरप्रमुखविखण्डितैभदन्तमुसलैरुन्मूलितविरोधिवंशाङ्कुरैरिव छादिताः सङ्ग्रामभूमयः, निशितनिस्त्रिंशधारोत्तारितारिशिरःशङ्खवलयैः प्रसादिता वीरलक्ष्मीः, असिदण्डपीडितैरहितकुलैरुद्वासिता वसुमती, वैधव्यविधुरितारिसीमन्तिनीनेत्रसलिलधाराभिः खेलितो मधूत्सवः, विपाटितविपक्षवंशादाकृष्य यशोमुक्ताफलमाभरणीकृतं त्रिभुवनश्रियः । तत्किल किमत्रोच्यते ।

कुर्वन्नुद्गतमेकदैव तरणिस्तोमं प्रतापक्रमैः
शत्रुस्त्रीनयनाश्रुभिर्विरचयन्ससार्णवैकाप्लवम् ।
नृत्यत्येष घनारवेण यशसा मुक्ताट्टहासः समि-
त्संहारेषु तवासिरत्र नृशिरःस्रग्भूषणो भैरवः ॥

अपि च—

देव क्षत्रियपुङ्गव ! प्रहरतः सङ्ख्येष्वसङ्ख्यं मद-
प्रस्यन्दप्रसरान्धसिन्धुरशिरःस्कन्धं कृपाणस्य ते ।
धारासङ्गतमौक्तिकद्युतिपरीवेषच्छलादन्तिके
दत्तः काण्डपटो झटित्यभिसृताराातिश्रियः सङ्गमे ॥

त्वदभिभयपलायनादरण्येषु शृणु श्रीमतामीश ! शात्रवीमवस्थाम् तथाहि ।

वर्षास्वद्य कुटीकृतेऽयमुचिते देवि ! प्रदेशो मया
नास्मिन्नेति वनापगाभर इति ब्रूते तवारिः प्रियाम् ।
यावत्तावदरण्यवासविषयावस्थोग्रदुःखस्पृशः
सा तस्याः स्त्रवदीक्षणाश्रुपयसामुन्मथ्य नीताऽऽप्लवैः ॥

किं बहुना—

स्वामिन्नवेक्ष्य निखिलप्रतिपक्षभूभृ-
दुन्मूलनैकविषमानलमुद्यतं त्वाम् ।
वंशो नतः सपदि सर्वनरेश्वराणां
तेनाङ्गसन्धिषु न स क्वचनापि भग्नः ॥

तदेवं निर्वैरिवंशीकृतेऽस्मिन् भूवलये वृत्तोऽयमायोधनविनोदानां व्यापारः। सर्वतः पुनरेष हरचरणसरोजपूजाप्रपञ्चनेषु निष्पद्यमानानेकसुरसदनसत्त्रप्रपारामसरःकूपवापिकादिप्रतिष्ठाध्वजलब्नेषु अनवरतमहायज्ञेषू( ज्ञयू ? )पोत्तम्भनेषु विप्रपरिगृह्यमाणभूमिदानोदकग्रहेषु सुकविकाव्यार्थभावनाप्रतोषपूजासु शरणसमागताभयप्रदानकरणेषु प्रणयपरिणद्धबन्धुवर्गालिङ्गनेषु तुरगकरिवाहनविलासकलितकुशलतोपलालनेषु सकलार्थिकृतार्थीकरणकर्मसु च व्याप्रियमाणः सततं विनोदयन्नेव हृदयमास्ते भुजस्तम्भो देवस्य ।

किन्त्वेकमस्ति ।

निर्वैरिणि क्षितितले रणदुःस्थितानामुर्वीभुजां भुजविनोदमहोत्सवाय ।
स्यादेष रोषवलितेषु वराहकेषु कोदण्डकेलिसुभगो मृगयाप्रसङ्गः ॥

अत्रान्तरे च कोऽपि मृगयाकौलेयककुटीरवर्त्ती पापर्द्धिकयुवा सह केनापि किमपि जल्पन्निमं श्लोकमपठत् ।

कुम्भैरुन्नतरस्तनी करटिनां नेत्रैर्मृगीणां लस-
द्दृक्पाता घनकुन्तलप्रणयिनी बर्हच्छदैः केकिनाम् ।
दंष्ट्राकान्तिकदम्बकैरपि कृतक्री(व्री?)डास्मि(स्मि?)ता पोत्रिणां
नाधन्यैरनुसेव्यते मृगवनश्रीरद्य रूपोत्कुरा ॥

राजाऽप्येतन्निशम्य रभसेनाधिरूढः साधु भोश्चित्रशिख ! साधु स्मृतं समर्थितं चैतदमुना श्लोकार्थेन प्रवर्त्तितश्चाहमस्मिन्नेव समये पापर्द्धिकस्य श्लोकपाठेधियं प्रवर्त्तयन्तीभिर्मृगयाधिदेवताभिस्तदद्यैव क्रियते मृगवनगमनाय सामग्रीति प्रतीहारमुखेन प्रगुणीकर्तुमुचितपाशवागुरासारमेयाद्युपकरणानि मृगयापरिवारमादिदेश । स्वयं तु यथाक्रमोपसेव्यमानप्रस्तुतविधेयलीलादिभिस्तामेव सवासरशेषामतिवाह्यरजनीमुत्थाय प्रातरभ्यर्थ्य निखिलनित्योपहारपरिकरोपचारप्रपञ्चैर्भगवन्तमिन्दुमौलिमुचितं च वेषमादाय पर्याणनिहितनवमणिमरीचिमण्डलालोकसमेतं तुरङ्गमाखण्डल इव कुलिशकिरणचक्रसङ्क्रान्तिदीप्रमुच्चैःश्रवसमधिरूढः पार्श्वतश्चटुलखुरपुटविपाटितविघ(?)त्तटेषु वाजिषु समारूढैरुपगतः समरलीलादिव्यापारसहचरेण मन्त्रिसूनुना विजयवर्द्धनेनाधिष्ठितैः प्रणयिभिरवनीश्वरकुमारैः पुरःप्रसर्पदाखेटखेलकपदातिपरिवारो मृगयावनपालदर्शितेनाध्वना तदभिमुखमुदचलत् ।

क्षणाच्च प्रवर्त्तिततुरगवेगः समन्तान(?) रसितैरनेकशकुनिकुलकूजितैरवि-

स्खलनगनिस्तं(झं?)रप्रवाहझात्कारैरनिलचारोच्चर(त्कीच?)करवैरापूर्णगर्भां कुसुममधुमदारणितषट्चरणचक्रझङ्कारैरुन्मीलितघनकाकमण्डलीकोलाहलामङ्गलमिव कोलेषुज्ञापयन्तीं, सञ्चरत्पतङ्गनखविकीर्णकुसुमकिञ्जल्कपूरैरनल्परजोवृष्टिभीषणमिव चित्रकेषु सूचयन्तीं, वहद्गिरिनिर्झरतरङ्गताडितशिलातटोच्छलितजलबिन्दुसन्दोहैरकालकरकोपलासारदुरितमिव सैरभेषु सूत्रयन्तीं, अनिलतरलितलतावनप्रसूनपतनैर्नक्षत्रपातारिष्टमिव मृगेषु दर्शयन्तीं, तरुशिखरशाखान्तरोड्डीयमानवानरभरत्रुटितनागचम्पककुसुमपरिभ्रंशैरद्भुतोल्कानिपातव्यापदमिव शार्दूलशशकसंवरादिसकलसत्त्वेषु संवेदयन्तीं, अनेकतरुलताङ्कुरविराजितां मृगयाटवीमवाप ।

अवाप्य च तदुत्सङ्ग एव त्वरितमविरतं च पापर्द्धिकैरावेद्यमानकरणीयः समुचितारम्भाय तत्रोचितानादिदेश । क्षणाच्च तैः परितः प्रसारितोदग्रवागुरावलयमन्तरान्तरनिवेशिताश्ववारमवहितधनुर्द्धरावरुद्धमार्गं प्रगुणितसारमेयं यथास्थानमुपस्थापितमहोक्षं निक्षिप्तदीपमृगकदम्बकं काननमावृत्य, रूपाविष्करणकृते सरभसमुल्लासितः, श्वापदविलोकनार्थमिव प्रविष्टः कन्दरदरीषु, भ्रान्तो गह्वरेषु, प्रधावितः पल्वलतटेषु, गतो निर्झरतरङ्गिणीषु, समन्तादुड्डीनजीवमि(वैरि?)व सहनिवासभूरुहैरुज्झ्यमानपार्श्वोविहङ्गमैः,झगिति पलाय्य घनतृणस्तम्भान्तरनिलीनैः कर्णपुटावरणविवरविन्यस्तवीक्षणं शशकैः, तत्समयगृहीतमुक्तार्द्धललत्कवलदर्भैरभितो विकीर्यमाणतरललोचनं कुरङ्गैः, सद्योनिर्दलितवल्मीकमृत्तिपिण्डपिहितविषाणकोटिभिस्तिर्यग्वलितकन्धरं सैरभैः, सपदि सकसेरुभूतलाकर्षितवलितवदनाग्रविस्फुरत्पोत्रप्रत्रैर्मुहुरुद्घुष्टघुरुत्कारमृदुरवं वराहैः, मुखार्द्धनिहितसल्लकीप्रवालवलयितकरैरंसदेशपातितकर्णतालैरपाङ्गमिलितनेत्रतारकमिभानां यूथपतिभिः, सुदूरमुच्चलितपुच्छच्छटास्फाटितमहीतटैर्विघटमानसृक्कपुटप्रकटितोरुदशनं शार्दूलैः, ससंभ्रमं विभाव्यमानो मृगयाकोलाहलः सहसैव समुज्झितशिशूनि विघटितयूथबन्धविधुराणि श्वापदकुलान्याकुलयाञ्चकार ।

यत्र—

वामं कुम्भतटेऽग्रपादमपरं सङ्कोचयित्वाचतं
शून्याधारमुरस्तटीमपि तिरश्चीनां दधानो हरिः ।
सावज्ञं च मि(वलि?)तो मुखेन विलिहन् सास्रक्कणेस्रक्कणी-
निर्मुक्तेभविदारणो मृगवनव्याकूतमालोकते ॥

ततश्च लुब्धकारब्धमधुरगीतरसाह्रियमाणहरिणः पुरःप्रदर्शितोक्षनिश्वासानीयमानशम्बरो दीपहरिणीविलोचनाकृष्यमाणकृष्णसारः समुच्छ्रितरूपदर्शनोन्मुच्यमानसारमेयसंहतिरन्तःप्रतिष्ठशशकवीच्छ(क्ष?)कूजनावेष्ट्यमानकण्ठी(रवः)त(र)लसुरसनाकरालकौलेयकारभ्यमाणपोत्रियूथपः प्रसरदश्ववारमण्डलीपिण्ड्यमानश्वापदगणः प्रगुणितशरपातधावितधनुर्धरनिरुध्यमाननिश्वसन्महिषयूथः सर्वथाऽप्यश्रुतपूर्वोवनदेवताभिरदृष्टपूर्वःश्वापदैरननुभूतपूर्वोवनेन बभूव महानद्भुतसमारम्भो मृगयासंरम्भः ।

अत्रान्तरे—

चापेनिवेशितशरं पुरतो नृपेन्द्रमालोक्य सृक्कविवरेषु वराहकानाम् ।
दंष्ट्रामिषेण दृढपात(पत्रि?)निपातभीतान्यस्थीनि निष्क्रमितुमाकुलमारभन्त ॥

अपि च—

शशकस्य क्षणं मूर्ध्नि लग्नं काण्डमशोभत ।
तत्कालरिष्टसंभूतं विषाणमिव मृत्यवे ॥

अन्यच्च—

उड्डीयमानः सहसैव दूरात्त्रिकोटितीव्रेण शिलीमुखेन ।
विद्धोऽन्तरालप्रणयी मयूरो मुहूर्त्तमन्धासुरतां प्रपेदे ॥

अपरं च ।

शाखामृगेण चपलप्रकृतिप्रसिद्धमन्तेऽपि तत्सहजमाविरकारि शीलम् ।
यः कीलितोऽपि विशिखेन झगित्यगच्छद्दुर्वीरुहाद्भुवमथास्य गुहां यमस्य ॥

किञ्च—

विमुच्य नादं निशितेषुविद्धो राजा मृगाणां पतितस्तथा वा(थैव?) ।
दिक्षु प्रतिध्वानमिषादभूवन्नकालगर्ज्जाडमराद्भुतानि ॥

सर्वतश्च—

महिषाः काननस्याधिदेव्या इव निवेदिताः ।
पेतुः क्षतास्त्रधारूथ(रोत?) रक्तपुष्पावमालिताः ॥

अथैवमनुबध्नता पापर्द्धिविस्तरेण प्रथमरवपलायितैः कैश्चिद्दिगन्तमाश्रितैर्ज्याघातघोषोन्मिषितकर्णैः कैश्चिद्वनान्तरमुपगतैरुड्डीयमानघनबाणवीक्षणशङ्कितैः कैश्चिद्गिरिगुहागर्भमभिलीनैर्दूरशरशिथिलघातसंवेदितैः कैश्चन गह्वरान्तस्तिरोभूतैरन्यैश्च बहुविधप्रहारापहृतजीवितैः पतितमृगसम्बरवराहादिरूपैः कैश्चित्सारमेयकुलैरालुप्यमानैः पापर्द्धिकैरुत्क्षिप्तसमाणैः प्रसादेन दीयमानै-

रौचित्येन च प्रस्थाप्यमानैः श्वापदगणैर्विरलतां गते मृगवने गगनशिरोऽधिरूढमालोक्य चण्डरोचिषमुचितमवसरे विजयवर्धनः सविनयमुवाच—"देव ! कृतमतिकुतूहलेन वृत्तोऽयमवसरः पापर्द्धेः यदेते समुच्छिन्नसकलसत्वं काननमवेत्य वामकरकलितलम्बमानबाणासना निवर्त्तन्ते धनुर्धरा, बलाद्वयनियन्त्रणस्तिमितवरवाजिनो मिलन्त्यन्योऽन्यमश्ववाराः, हेलानिवेशितदृष्टयः शून्यमवलोकयन्ति दिग्वीक्षजनाः, अहमहमिकया सश्वसनेन तरलितललदलघुजिह्वलता निरुत्साहसौम्यमाकारं वहन्ति च श्वानः, किञ्च तेजसा सधर्मा देवस्य भगवानुष्णकिरणोऽपि गगनगर्भमागत्य तीव्रशरशिखरखण्डितमृगामिषस्य पाकार्थमग्निमिव प्रगुणयन्नुदग्रदाहमातपं चकार ।

तथाहि—

पूत्कारेण तरङ्गितं पदतलैरुद्वर्त्तमुत्प्रेरितं
जङ्घोरुक्रमणैर्द्विभागितमुरोभित्त्या च वारि क्रमात् ।
घर्मार्त्तः परिशीलयन्नधिविशत्येष स्रवन्ती ह्रदं
भृङ्गैस्तसमदाहतैरविधुरैरुन्मुक्तगण्डो द्विपः ॥

इतश्च—

यदर्कांशुक्रान्तः स्फुरदरुणपुष्पोदरधिया
प्रविष्टो नामातः (सान्तः?)क्वणितमलिडिम्भः प्रकुरुते ।
कपिः स्थित्वा स्थित्वा तदिदमनुशृण्वन्विचकितो
धुनोत्यास्यं रौति प्रचलति चलत्युल्ललति च ॥

किञ्च—

स्वेदाम्भश्छुरितं कपोलफलकं नेत्रे मनाङ्मीलिते
वैधुर्यालसनिस्सहं वपुरपच्छायं च वक्राम्बुजम् ।
सद्यः सम्मिलितोज्झदीधितिकरस्पर्शादसौ बिभ्रती
भावेनेव मनोभवस्य शबरी संवर्गिता लज्जते ॥

अपि च—

सर्वतो विजृम्भमाणेनामुना मध्याह्नतरणेरातपेन शिशिरपत्रपटलान्तरनिविशमानशकुनिचरणचूर्णिताविरलकिसलयरसेन प्लाविताः प्रस्विन्ना इव द्रुमाः, मध्याह्नपवनदोलितानामतिचला प्रकामतप्तोर्वीतलगता वेल्लतीव शाखिनां छाया, करिकुलविगाहनोड्डीनषट्पदपटलेनोपरिवृत्तेन नीलातपत्रेणेव तरुणोरुणकदर्थिता निर्वाप्यते कमलकाननश्रीः, उत्त्रस्तपुलिन्दमज्जनोन्मिषितगुरुतरङ्ग-

तरलानि क्वथन्तीव निर्झरजलानि, घर्मांशुकरशोषितरसश्लथीभूतवृन्तविगलितैरालोहितलताप्रसूनमुकुलैरुत्पन्नास्फोटकेव दृश्यते क्षितिः, कन्दरदरीप्रवेशाधावितानामरण्यचराणां परुषखुरशिखरलिखितगिरितटोच्छलदनच्छगैरिकारजःपूरपाटलाः स्फुटमिवाताम्रीभूता दिशः, हृदान्तः क्रीडता यूथपेन लीलाक्षिप्तकरदण्डपुष्करविकीर्णाभिरम्भश्छटाभिरातपविमूर्च्छितमिवाभिषिच्यते नभः । तदेव नियतमितो हृदयमपवार्य गम्यत इति समुचितमुदीरितं विजयवर्द्धनेन वचनमभ्युपगम्य राजा त्वरितमेव संवृताखेटकरसप्रसङ्गो निर्जगाम ततो मृगवनात् ।

निर्गत्य गच्छन्कियन्तमध्वानमुद्धुरमहातपोत्तापविधुरितपरिवारः कुत्रापि रविकराप्रवेशपरिशीतले प्रदेशे दुःसहमध्याह्नमतिवाहयितुमुत्पन्नमानसः पुरस्तान्नातिदूरे हरितमणिमरीचिमेचकाभोगं दिग्विजययात्राप्रस्थानमिव जलधराणामधः, छायाडम्बरमिव नन्दनारामस्य, श्मश्रुस्थानमिव जम्बूद्वीपस्य, कुरुम्बनिकुरुम्बमिव वसुन्धरायाः, य(ग?)मनिकामूर्द्धानमिव दिशां, इन्द्रनीलमयमाभरणमिव ब्रह्माण्डनिधानकलशस्य, हरिताम्बरमयं नेपथ्यमिव नरलोकनीलपटस्य, शाद्वलाभोगमयं सस्यनिर्माणमिव भारतक्षेत्रस्य, सर्वतोऽपि प्रकामघनतया निखिलतरुवल्लिपल्लवाञ्चललग्नेन शोणिम्ना बालातपेनेव रविप्रवेशार्थमुपरुध्यमानम्, उत्पन्नशीतलास्पदतया क्वचिन्नीलविपुलकदलीपलाशैः प्रबलतडित्तापसंपीडितैरिव प्रथमपाथोधरैरधिश्रितं, क्वचिन्निरन्तरोल्लसितविशदकुसुमत्विषां स्तबकैस्तीव्रतापकदर्थितैरिव शारदाभ्रखण्डैरुपसेव्यमानं, क्वचिदनल्पफलपाकपिञ्जरप्रभया शिखिक्षेपदाहोत्तप्तयेव हिमश्रिया स्वीकृतावस्थानं, गलन्मधुजलासारस्नापितैरिव मधुव्रतैः प्रविश्यमानकुसुमकुटीरकोटरं, पाकभरनिपातस्फुटितफलोदरद्रवेण कर्दमितमेदिनीप्रचारभग्नैरिव पत्रिभिरधिरुह्यमाणभूरुहं, दिनकरकराप्रवेशसुस्थालयेषु तमालषण्डेषु प्रविश्य तिमिररूपेण रजन्याऽतिवाह्यमानवासरं, सशीकरेण मकरकेतुकुञ्जरस्य पूत्कारेणेव बहुलजलतुषारवाहिना विलाससरसीसमीरणेन शिशिरिताभ्यन्तरं, प्रसरद्वेलोरगलतादिवल्लीवलयमालिताभिरनल्पमण्डपश्रेणीभिरास्पदमदभ्रशोभायाः, सुरभिसुरदारुचन्दनघनसारसरलकैलालवङ्गप्रायैः प्रचुरपुन्नागपाटलीनीपचम्पकमुचुकुन्दकेसराशोकमुख्यैरपमितपनसाम्रजम्बुजम्बीरकक्रमुकनालिकेरखर्जूरिकाङ्कोलसारैरङ्ग( ति ? )सुगन्धिभिरुन्मिषितकुसुमरम्यैरतिरसफलोपकारिभिर्मञ्जरितमरिचवल्लरीभिरालिङ्गितप्रकाण्डैरन्योन्यमिलितविस्फारशिखरैः शाखिभिरन्त-

रान्तराहरितपृथुपलाशमांसलैश्च कदलीख(का?)ण्डैरखण्डिताभोगशोभं, विविधफलपाकविशेषास्वादमुदितद्विजकृतकोलाहलोपलक्ष्यमाणमध्यं सत्रमिव वैदेशिकानां, अनङ्गजनकेन सौरभेणाध्यासितं श्वशुरकुलमिव रतेः, प्रथितपत्ररथसनाथं राजभवनमिव रामणीयकस्य, बहिर्निवेशितस्नुहिबदरनिर्गुण्डीझाटकृतरक्षं प्रसवास्पदमिव वनश्रियः, समुपविष्टानेकजरत्कीरपरिगतमन्तःपुराधिष्ठानमिव मन्मथस्य, क्रीडानिकुञ्जमिव शृंगारमृगेन्द्रस्य, दुर्गमिव सर्वर्तुकिरातानां, ऐश्वर्यमिव वसन्तस्य, चलितमिव मलयानिलस्य, निकामरमणीयं स्थानमिन्द्रियाणां कुसुमसुन्दरं नाम विलासोद्यानं ददर्श ।

तच्च सकलसमयसमीहितानामास्पदमुदीक्ष्य समन्तादपनेतुमातपक्लान्तिमवेक्षितुं च कौतुकरसेन वनश्रियः शोभामशिश्रियत् । अथ तत्र विश्रामरसोत्सुकीभूतहृदयेषु त्वरितमुत्तीर्य केषुचिदुत्पर्याणयत्सु, केषुचित्पांसुलायां भुवि लोठयत्सु, केषुचित्सङ्कलय्य दूर्वास्थले विमुञ्चत्सु, केषुचित्क्रीडाशैलनिर्झरे स्नापयत्सु, केषुचित्पयः पाययत्सु, केषुचिच्छायासु चालयत्सु तुरङ्गमानश्ववारेषु, पत्तिषु च केषुचिदुत्तार्य कूर्पासकान्पवनमाददानेषु, केषुचिदुन्मोच्य बन्धनं केशान् विकिरत्सु, केषुचिदास्तृत्योत्तरीयं लतामण्डपमधिशयानेषु, केषुचिच्छायासूपविश्यात्मानमुपवीजयत्सु, केषुचित्प्रविश्य दीर्घिकास्वङ्गानि क्षालयत्सु, केषुचिदवेक्ष्य रम्यतामितस्ततो भ्रमत्सु, केषुचिन्निपतितानि भुवि खादत्सु फलानि, गृह्णत्सु कुसुमानीत(रेषु,?)यथायथं निषीदति परिजने, त्वरितमेव सम्मुखमुपागतं दशनक्षतैरनल्पपरिपाटलद्युतिभिः फलैरापूर्णगर्भं पात्रमुद्वहता दारकेणानुगम्यमानं कृतप्रणाममतिप्रसादस्निग्धया दृशा गिरा सन्मान्य वनपालं वसन्तशीलमवनीश्वरः सरभससमीक्षिताभ्यन्तरमनोज्ञताकृष्टमानसः प्रवेश एवावतीर्य तुरङ्गपृष्ठादधिष्ठितः कतिभिरवसरोचितैः सखिभिरन्तः प्रविश्य विजयवर्द्धनस्कन्धविन्यस्तपाणिः समन्थरक्रममनुप्रधावता वसन्तशीलेन निवेद्यमानेषु विविधतरुवल्लिवीरुधां वलयेषु विसरदमृताम्बुसारणीमिव धवलायतां निवेशयन् दृष्टिमस्तोकतोषः स्तोकान्तरमगच्छत् । अच्छिन्नकौतुकश्च तथा गच्छन्पादय(?)देकाभिरुल्लसदशोकतरुताडनोत्पातचरणारणितमणिनूपुराभिः,(काभिश्चित्) केसरोपचारमदिरागण्डूषसौरभाकृष्टषट्चरणझङ्कारिणीभिः, काभिश्च कुरबकालिङ्गनविलोलभुजलतोच्छलद्वलयकलरवाभिरावर्ज्यमानपादपोपिपासाः समदसीमन्तिनीभिः, सलीलमशेषतः पश्यन् पुरस्तात्कारागृहमशेषरत्नानां, यन्त्रावासकमसमसायकरसस्य, रामणीयकलोभस्थितैर्मधुसमयखेलनोच्छलितजलबिन्दु-

भिरिव मुक्ताफलैरलङ्कृताभोगं, स्वर्गाभिरामतां द्रष्टुमागतैर्लग्नचिरकालकुपितेन्द्रशापशिलीकृतैरिव मणिमयैर्मालाविद्याधरैरुपेतं, प्रोषितमधूत्सवविरहविरचितवेणिलतयेव ग्रीवाभरणबन्धनग्रन्थिमणिमेचकांशुच्छटया परिरथ(गत?) पृष्ठाभिरधिष्ठितं रत्नपुत्रिकाभिः, अमलमणिशिलाफलकनिर्मितमवाप मण्डपं वसन्तमहोत्सवास्थानस्य। तत्र च स्थित्वा यथाक्रियमधिकारिभिरादावेव प्रगुणितं निर्वर्त्य निखिलमेव माध्याह्निकं कर्म समुत्थाय तस्यैव चाङ्गणोत्सङ्गभुवि सरोजवनसुन्दरे(र?)विलाससरसि तदाऽन्तर्व(सीतटोपान्तव?)र्त्तिनः प्रसरदुरुपत्रपल्लवोपरूढविस्तरस्य सहकारशाखिनश्छायायां शिशिरजलसमीरसङ्गमसुखानुभोगमभिलषन्नुपाविशत्।

तत्रापि समुपविष्टश्च पुनरविश्रान्तोद्यानलक्ष्मीसमीक्षणरसप्रसक्तिरितस्ततो यथाऽभिकमनीयोद्देशमुपसर्पयन्नवसुखोपशालितां दशामवसरज्ञेन भर्तृचित्तानुकूलनकलावता विजयवर्द्धनेन " देव! प्रणयकुपितया रत्या चरणतलेन ताडितोरःस्थलस्य कुसुमपत्रिणस्त्रुटितहारच्छटाविकीर्णैरलक्तकारक्तमौक्तिकैरिव परुषशुकमुखशिखरजर्ज्जरितपरिणतफलनिपतदाताम्रदाडिमीबीजैरभितो दन्तुरितसुन्दरमवधार्यतामेतदेतस्य तलं तरूणां षण्डस्य, इतश्च पाकभरभिद्यमानमेदुरालम्बिफलविगलदविरलरसस्तबकपातादाकर्थं(कंपि?)शिखरैः सस्वादूपलम्भमाधूतमूर्द्धभिरिवावर्ण्यमानो मूलविटपैराह्लादयति हृदयमेष मण्डपो द्राक्षालतायाः, परितोऽप्युपरि तरुलताकुसुमसंक्षरदपारमधुरसभरेणार्द्रीकृततला तीर्थजलमङ्गलाप्लवनेन प्लाविता मदनराज्याभिषेकवेदिकेव दृश्यतामियं मालिनी, शिलागण्डशैलतटे चन्द्रकान्तस्य लसच्चन्द्रकान्तचित्रितकलापैः केकिभिः सोपानकैश्च किमपि शोभतेऽत्र मणिमण्डपाङ्गणतले वापी, पुरस्तादाबद्धपूगैः क्रमुकतरुभिः क्रीडाकुरङ्गैश्च लोचनयोः प्रीतिमुत्पादयत्येषा स्थली विलासभूधरस्य, विसारितमालेन जलयन्त्रेण तरूणां वलयेन च सेव्योऽयमिह वामतो बालमातुलिङ्गीवनप्रान्ते कूपः, प्रोल्लसत्कलरवोर्मिरमणीयया जलाश्रितया मरालमण्डलिकया च निर्वापिकेयमन्तःकरणस्य दक्षिणा कुरवकनिकुरुम्बगर्भे दीर्घिका " इत्यादि साङ्गुलीनिर्देशमुपदर्श्यमानमालोकमानः सहसैव कुतश्चिदेकमनधिगतोत्थानसंश्रयमुच्चार्यमाणं श्लोकमशृणोत्।

हे चन्द्रोपलगौरि! हे मरकतश्यामाऽभिरामाकृते!
हे चामीकरभिन्नवर्णसुभगे! हे पद्मरागाम्बरे!।
एषा पश्यत हन्त वज्रघटिता दूरे फलं वाञ्छितं
दत्ते नोत्तरमात्रमप्यतिशठा चाटूक्तिदीनस्य मे॥

श्रुत्वा च तं झगिति सर्वतो भ्रमितदृष्टिरुद्दिश्य वसन्तशीलं (प्रोवाच) अहो! क्वचिदिहैव कोऽपि नूनमवधीरितो वल्लभया सोपालम्भमिव सखीषु प्रतिपादयन्नेष ब्रूते इति प्रोक्ते नृपेण वसन्तशीलः कृत्वा स्मितमुवाच। स्वामिन्! न कश्चिदयमवज्ञातः प्रियया, न चैष जनः प्रतिपाद्यते सखीनां, यदेतत्तदाकर्णयतु स्वामी। देव! यः किल देवेन मनोहरंविनोदोपकरणमर्पितो मे पालयितुमनल्पगुणश्चित्रशिखो नाम शुकस्तमहमद्य समागते स्वामिनि निकामव्यग्रतया विस्मृतो वराकमभ्यवहारेण संभावयितुं, स एष स्वामिन्नमुना मरकतस्तम्भेनान्तरितपञ्जरोऽत्र गर्भे मण्डपस्य क्षुधान्धीभूतमानसः प्रतीय साक्षादिवैतस्या वज्रोपलशालभञ्जिकायाः करे कमलरागदाडिममिदं मुहुर्याचितमनासाद्य सखीभ्रमादिमास्वभ्यर्णवर्त्तिनीषु विविधमणिपुत्रिकासु ज्ञापयन्नेतदेवमालपति। इति विज्ञप्ते पृथिवीपतिरुक्तवान्। अहो! तथाविधस्याप्येतस्य सकलतत्वावबोधबुद्धिमतश्चित्रशिखस्य सुदूरमिह विपर्यस्तं चैतन्यममुना कृत्रिमफलाभिलाषेण, तत्खलु दृश्यतां कियत्किल विगलितविवेकोऽयमात्मानं नटयति। इत्युक्त्वा पश्यति नरेश्वरे निस्सरणसमुद्यमैकरोषिणस्तस्य प्रखरचञ्चुसन्दंशग्रहेण मुहुर्मुहुराकृष्यमाणा तुसिल(पेशल?)त्वात्पाषाणजातेस्तनीयस्त्वात्स्वरूपस्य कथञ्चन सा नाम विद्रुमशलाकामयी पञ्जरद्वारान्तरालसरिका झटित्येव परं भग्ना। तेन च पथा लघुनिर्गमो नन्वेष निःसृतशिखो ध्रियतामिति न यावदुच्छलितः कलकलस्तावदसौ झगिति निर्गतः पञ्जरक्रोडसङ्कटा(द)वकाशविस्तरायां भुवि निरवग्रहं प्रचारमासाद्य तदावेशप्रधावितस्त्वरितमेव सिंहासनस्थानवेदिकामध्यरोहत्। आरुह्य च सन्निधीभूतमुपकोणतलवर्त्तिरत्नपुत्रिकाकरगतं तत्पद्मरागदाडिमं सुदूरमुदञ्चिताघातचण्डया चञ्च्वा जघान। तेन च झटिति दृढमणिशिलास्फालेन विदलिता चञ्चुः। चञ्चुभङ्गसमकालमेकहेलयैव तस्यां शुकशकुन्तमूर्त्ताविभेन्द्रकरपीवरोरुरायतभुजः परिघवक्षःस्थलो विसङ्कटललाटपट्टः स्पष्टाकृतिरष्टादशवर्षदेशीयः पुरुषो बभूव।

राजाऽपि विस्मयोत्क्षिप्तपक्ष्मपालिः अहो! किम्! किम्! किमेतदाश्चर्यमियत्येवान्तरे कां दशामुपेतश्चित्रशिखः?" इति ससंभ्रमं सह पार्श्वगैर्द्रष्टुमारब्धवान्। सोऽपि कुतश्चिद्विच्युतंकायात्कुट्टिमैकदेशानिपतितमादाय करेण किमपि संवृतं वस्तु विचिन्त्य च किञ्चिदुन्मीलितस्मितः समन्तान्मणिकर्मरमणीयं तं मण्डपमुदीक्ष्य बहिः प्रहिणोति लोचने यावत्तावज्झगित्येवाग्रे

कुसुमसायकमिवानेकनवशरग्रहणाय प्रविष्टं, पुरन्दरमिव नन्दनप्रमादावासितं, हरिमिव कमलकुलभवनवासिनीं श्रियमानेतुमागतम्, ऐश्वर्यसुस्थितं कुबेरमिव विलासोद्यानिकायामुपेतम्, अन्तर्निवासनिर्विण्णं वरुणमिव क्रीडासरोवरान्निःसृतं, सेवाप्रवेशितेन सकलराजचक्रेण मुक्तस्य महीयसो दर्पतिमिरस्य राशाविव मरकतनिर्माणमेचकाभोगभासिनि रत्नपीठे प्रदत्तपादपङ्केरुहम्, अहितनरपालशिरसि स्थापनोत्थितेन मुकुटमणिमकरिकाप्रतिबिम्बकेनेव रेखामयेन चक्रवर्तिलक्षणमकरेणलाञ्छितातिकोमलतलाभ्यां चरणपल्लवाभ्यामुद्भासमानं, नमद्भूपालचूडामणीनां किरणकूर्चकैरनवरतमुन्मार्ज्यमानेनेव विमलकान्तिना जङ्घायुगेन विराजमानं, भद्रजातेर्मतङ्गजादपहृत्य हस्तश्रियं सृष्टमितीव भद्रमिति सर्वतः प्रसिद्धमूरुद्वितयमुद्वहन्तं, गुरोरन्तिकेनेव नितम्बस्य सुवृत्तीभूतं नाभिबिम्बं, सदा प्रसङ्गेनेव नाभिश्रियः कृशीभूतं मध्यं, महता दारिद्र्येणेव मध्यस्य तनुभूतां च रोमावलीं बिभ्राणं, राज्यश्रियाधिष्ठितस्य वक्षसो देशस्य समन्तादाघाटचिह्नेन महाह्रदमण्डलेनेव हारवलयेन विपञ्चिताभरणशोभं, महता प्रेम्णा श्रियस्सकाशमुत्कण्ठागतया श्रीगन्धि(क्षीराब्धि?)वेलयेव हारप्रभया प्लाव्यमानोरःस्थलं, दशानामपि दिशां वशीकरणतिलकैरिव दशभिराताम्रविमलनखरत्नवलयैरलङ्कृताङ्गुलिदलेन भुजद्वयेन भूष्यमाणं, सकलरिपुराजकश्रीसमाकृष्टिलग्न कुङ्कुमरसारुणेनेव ताम्ररुचा करतलेन लीलागुञ्जं कलयन्तं, चन्द्रमसो द्वेषिणी पद्मजातिरिति सहोदरपक्षभुवा शङ्खेन मुखकमलनिग्रहाय प्रहितेनेव निजाङ्कभूतेन रेखात्रयेण प्रसाधितस्य कण्ठदेशस्य शोभां भजन्तं, सरस्वतीसद्मनो मुखस्य द्वारि विद्रुमदेहलीपट्टमिव पाटलप्रभमधरमादधानं, सुदृढकार्मुकविकृष्टये भुजबलाभिवृद्धिमभ्यस्यतो मन्मथस्याकर्षरज्जुमार्गयोरिव कमनीयकर्णपाशयोः श्रिया सारीकृताकारं, त्रिभुवनसीमन्तिनीहृदयग्रहाय रतिस्मरयोः सिन्दूरमुद्रितैकदेशं राजादेशद्वयमिवोपात्तलोहितं सुलक्षणमीक्षणयोर्युगलमितस्ततो व्यापारयन्तं, वदनखलकप्रविष्टयोः सुवीर(स्वीय?)नेत्राङ्कयोरन्तर्मन्मथनिहितेन निषेधदण्डकेनेव चारुणा नासावंशेन शोभमानम्, उत्कृताशेषभूभृद्गणगरीयसः शिखारूढशासनस्य भरादिव वक्रतामुपेताभ्यां भ्रूलताभ्यामलङ्कृतं, तृतीयं चक्षुराच्छादयितुमाहितेन शिखण्डशशिखण्डकेनेव ललाटपट्टेन गोपिताकारं हरमिव नरलोकावतीर्णमुपलक्ष्यमाणम्, एकतो द्युतिमता मुखेनान्यतो घनस्निग्धेन कुन्तलकलापबन्धेन सुमेरुमिव चन्द्रान्धतमसाभ्यामुभयतो भ्राजमानं, सुदूरमुल्लसन्तीभिराभरणमणीनामरुणपिञ्जरप्रभाभिः सद्यः सपल्लवमुकु-

रलक्ष्मीकमिव निजाश्रयप्रभावादाम्रद्रुमं कुर्वन्तं, शिरसि विस्फुरता चूडामणेर्ज्योतिषा निधानमिव गुणानां, अस्वल्परूपमप्रमितकान्तिकमनीयमनन्तलावण्यललितं, मध्यतनस्य जगतः प्रभुत्वे एकमपि परिगतमशेषराजन्यलक्ष्मीभिः, सर्वनरलोकजुषामुपरि वर्त्तमानमपि तले एकातपत्रस्य(विराजमानम्?) नवखण्डभूमण्डलाधिराज्यसिंहासने निविष्टमपि लीलासरस्तटे समुपविष्टं राजानमद्राक्षीत्।

दृष्ट्वा च सप्रत्यभिज्ञमिवान्तरुल्लसता सम्मदेन सपदि प्रहसितेक्षणकपोलपालिः सरभसमतिसत्वरैः पदैरागत्य भुवं प्रतीहारस्य सह तेन च किञ्चिदाभाषमाणः क्षणं तस्थौ। स तत्र तिष्ठन् ज्ञापितानन्तरमवनिपाज्ञानुवर्त्तनपरेण प्रतीहारेण सगौरवाह्वानसन्मानितः प्रविश्य कृतोचितप्रणामः प्रतीहारदर्शितं यथार्हमासनं भेजे। उपविश्य च सप्रतोषमात्मनः कृत्या राजानमुपश्लोकयाञ्चकार।

ये दानोद्धुरगन्धसिन्धुरघटाकुम्भान्भृशं भिन्दतो
लग्नाः संयति वर्त्तुलोज्ज्वलरुचो राजन्! कृपाणे तव।
लोकस्तान्प्रतिवक्ति मौक्तिकमणीन्मिथ्यैव सत्यं पुन-
स्तेधाराजलमज्जदूर्जितरिपुव्रातोल्लसद्बुद्बुदाः॥

अपि च—

त्वत्खड्गाघातवेगोच्चलितमुरुमणिश्रेणिभास्वत्किरीट-
त्विड्गाढोपप्रदीप्रं गतमहितशिरःसङ्गरे दूरमूर्ध्वम्।
तस्यैवाशु प्रवृत्ते त्रिदशवनितया सार्द्धमूढे विवाहे
यागान्ति(?)स्तम्भशोभामनुभवति नभोवर्हि राजन्! मुहूर्त्तम्॥

अनन्तरमादाय वामकरतलाद्दक्षिणपाणिना तत्र वस्तुनि व्यक्तीकृतं कुण्डलितमेकं पटमग्रतो भूत्वा देव! जगत्रयस्वामिना सुरेन्द्रेणाप्यनासाद्यमिदं मेलकस्थानमशेषजननयनपरिषदां वस्तु। पश्यतु पशुपतेः प्रसादसर्वस्वहरो देव इति राज्ञः समर्पयाञ्चक्रे। राजाऽप्यन्तरएव वसन्तशीलेनाच्छिद्य समर्पितमादाय किमेतदिति च प्रसार्य रभसा निवेशितोदारदृष्टिरर्द्ध एव चित्रप्रपञ्चितामात्मनो मूर्त्तिमपश्यत्। उपजातविस्मयश्च हंहो! केन किल कथमहमिहालिखित इति नेदीयसां कौतुकमुपजनयति जनेश्वरे मिलितात्महृदयत्वाद्तिहर्षेण विकसिताक्षिरध्यक्षः सकलसैन्यानां सिद्धलाङ्गदो जगाद। देव! देवपूजाक्षणे यत्र गतां युष्मन्मूर्त्तिमनुध्यायति स खल्वेष ध्यानपटः सेनापतेः

पञ्चालसिंहस्य। तदा हि दिग्जयप्रवृत्तः पञ्चालसिंहः स्थलपथपरिमाणं धरणिपीठमुपसाध्य जलनिवेशदुर्गमाणि द्वीपान्तराणि प्रसाधयितुमम्भोऽध्वना पोतयानैः विचरितुमारब्धवान्। तथा पर्यटंश्च कदाचिदेकत्र क्वचन विगलदुपकूलकेसरतरुकुसुमसुरभितोदन्वदम्भसा धौतसितसैकतायां रमणीये खेचरविश्रमसद्मन्यन्तरद्वीपकेऽवतीर्य निर्वर्त्य च पौर्वाह्णिकं कर्म क्षणं विशश्राम। ततश्च लब्धाऽनुकूलपवनतया त्वर्यमाणो निर्यामकैः सत्वरमुत्थाय पोतमारूढवान्। तत्रैष त्वरया व्याकुलितहृदयेन देवपूजोपकरणाधिकारिणा द्विजेन विस्मृतः। क्षणेन च योजनशतप्रमाणमध्वानमुल्लङ्घ्य वहता पोतेन तत्किल स्थानमुज्झित(मिद)मितिकोऽवैति पदे पदे तादृशानेकदृश्यमानान्तरद्वीपसहस्रधारिणि पयोनिधौ येन पुनर्निवर्त्त्य गृह्येत। इत्यभिधाय तस्थौ।

राजा तु भवत्वनेन तावदन्यदिह किमास्त इति पश्यन्नग्रे सन्धानरेखया मेलित इवापरोऽयमुपलक्ष्यते पट इति कुतूहलात्सर्वमुद्वेल्ल्य सहसैव पुरस्तादाक्षेपशिल्परचनामिव पितामहस्य, चित्रशालिकारम्भचर्चामिव रतेः, परिज्ञानत(प?)ट्टिकामिव मनोभवाह्वस्य, रणव्यूहकल्पनामिव शृङ्गारसुभटस्य, त्रिभुवनाङ्गनारूपमपहृत्य नियमितनिश्वसितशब्दमुप्तां तस्करीमिवावृत्यपटमवस्थिताम्, उद्यतहरललाटलोचनानलभयपलायितामसमशरशरीरश्रियमिव निभृतीभूय संलीनां, शक्रशापसंपातितामुर्वशीमिव चित्रवपुषा परिणतां, वर्त्तितनवनाभिम्मण्डलाभोगभूमिमिवसौभाग्यक्षेत्रपालस्य, लिखितस्तनचक्रवर्तीं वशीकरणविद्यामिव त्रिभुवनस्य, भरितकपोलपत्रस्वस्तिकामभिषेकवेदिकामिव यौवनावनीश्वरस्य, प्रदर्शितरूपसारां केवलिकामिव युवजनमनोविकारज्ञानस्य, पक्ष्मसम्पुटास्पन्दैरनिमिषविलोचनां देवीमिव विभाव्यमानां, निश्चलाङ्गलतावयवभावेन मदनदाहमूर्च्छितां रतिमिवानुमीयमानाम्, अनालापतया तपश्चरणाचरितमौनां गौरीमिव लक्ष्यमाणां, सितप्रभासंभारशालिनि पटे लक्ष्मीमिव क्षीरोदवारिणि,उदन्वतीमिव जाह्नवीपुलिने, सावित्रीमिव द्रुहिणहंसपक्षासने, सरस्वतीमिव आसनसरोजपत्रे, रोहिणीमिव हिमांशुवक्षसि, महीमिव शेषफणफलके, केशवीमिव पट्टाभिषेकपीठे निविष्टां, रतिसङ्गनिःसहानङ्गचापच्छटामिव लिखितां, प्रतिपदिन्दुमूर्त्तिमिव रेखामयीं, परमेष्ठिसृष्टिविद्यामिव प्रपञ्चितानेकवर्णां, सूत्रसंहतिमिवाधिष्ठितपटाम्, अभिरामदर्शनवतीं चित्रगतां युवतिमद्राक्षीत्।

आलोक्य च तां सहर्षं, अहो! रूपमेतस्याः ।
शृङ्गारस्य जगज्जयध्वजपटालङ्कारचिह्नं नवं
छायालग्नमनल्परूपरमणीगर्वस्य यात्रावृतम् ।
गात्रत्राणविनिर्मितं च कवचं देवस्य चेतोभुवः
केनैतल्लिखितं वरेण सुधियामस्याः सुरेखं वपुः ॥

अथवा—

सत्यं पटो धवलितः कलया हिमांशोरालोडितोऽमृतरसेन च वर्णकौघः ।
पुष्पेषुरात्मशरतूलिकया लिलेख तेनैतदित्थमतिनिर्वृतिहेतुचित्रम् ॥

यद्वा केवलमियं वज्रलेपेनैव लिखिता प्रकृतिरनुमीयते । कथमन्यथा पक्षिणीव मे लग्ना प्रगाढमितो न विघटते दृष्टिरस्याश्च चित्रकर्मणि विपश्चिता । नियतमसावेवरेखा चक्रवर्त्तिलक्षणमङ्गगतं मदनराजस्य; ललाटपत्रके चास्मिन्नमलमषीलिखितेयं कुरुलसंहतिः स्फुरन्मन्त्राक्षरश्रेणिरिवरूपवतीनां योषितामवश्यं दर्पज्वरमपहरत्येव; किञ्चैतद्दर्शनं सद्य एव पुंसां मनो विकारयतीत्यविश्वासादिव रतिरनङ्गेन सर्वतः सहैव परिभ्रमति, रोहिण्यरुन्धत्यौ शशिवसिष्ठयोरुदयानुदयेष्वपि पार्श्वं न मुञ्चतः,श्रीः सोदरेण मणिना कौस्तुभेन लक्ष्यमाणाप्यजस्रमसुरद्विषं (आश्लिष्यन्ती?) चात्र(स्ते,?) शची सततमनिमिषेण चक्षुषा शक्रमालोकयन्ती तिष्ठति, उमाऽपि परिगृह्य कायार्द्धमन्धकरिपोरङ्गमिलितैवास्ते। तत्खलु रूपसर्वस्वकलशी का पुनरियं भविष्यतीति सञ्चिन्त्य चित्राद्‌पवर्त्य कौतुकोन्नतेन चक्षुषा ससंभ्रमं संभाव्य तं निवृत्तशुकशरीरं पुरुषमप्राक्षीत् । "हंहो ! महात्मन् ! कथय, को भवान् ?, कुत्र कुले जातवान् ?, अवासश्च किं नाम कमनीयं नाम ?, जन्मदेशे च कस्मिन्नपि पत्तनविशेषे स्थितवानसि ?, विद्याभ्यासेन केन वा प्रकर्षमागतोऽसि ? क्व चास्मिन्मूर्त्तिभृता पदेन घटितास्पदेयमीदृशी मृगीदृशः प्रतिकृतिरासादिता, का चेयम् ? किमर्थमिह प्रपञ्चिता चित्रेण ? त्वमपि कथममुं शुकशकुन्तभावमापन्नः ? को वा पुनरात्मलाभे हेतुः ?" इत्यभिहितो नरेश्वरेण "स्वामिन् ! महत्कुतूहलवती च खल्वियं कथा नितान्तमवहितैः श्रूयताम्" इति सोऽब्रवीत् ।

अत्रान्तरे च समुचितार्थवेदी विलोक्य सर्वतो वसन्तशीलः सादरं व्यजिज्ञपत् "देव ! श्रोतुमिमां नवरसानुषङ्गिणीं कथामस्थानमयं प्रदेशः । तद्वरमिह सेव्यमणिमण्डपान्तर्निविश्य विस्रब्धैः श्रूयते (श्रोतुं?) व्यतिकरोऽयम्

अत्र तु प्रतीहारहुङ्कृतेन मूकतां गतेऽपि परिजने समन्ताद्दुर्निवारैरेभिरासन्नैरधिमुकुरमञ्जरीकुसुममलिझङ्कारैः, अधिफलमुच्छृङ्खलशुकादिशकुनिकलकलैः, अधिचूतशिखरमुल्लपत्पिककुटुम्बकूजितैः, अधितमालषण्डमुन्नादमयूरकेकारवैः, अधिदीर्घिकापुलिनमतिकलमरालकोलाहलैः, इतस्ततो विकृष्यमाणं मनो नावधानसखं भवितुमीश्वरम्" इति प्रोक्तो महीपतिरेवमेतदिति सत्वरमुदस्थात् । ततस्तदाकर्णनकौतुकत्वराभरेण षट्सप्तपदेऽपि वर्त्मनि स तत्र गव्यूतिशतायिते कथंकथञ्चिदुर्वीपतिराप मण्डपम् ।

विमलमणिमहिष्ठे मण्डपे तत्र सार्द्धं
प्रणयिभिरुपविष्टश्चिन्तयन्नेतदेवम् ।
भवतु तदिह यन्मे वाञ्छितं सूचयन्ती
स्फुरति हरनियोगादस्य सारस्वतश्रीः ॥

इति कायस्थकविसोड्ढलविरचितायामुदयसुन्दरीकथायां
चित्रसन्दर्शनो नाम सारस्वतश्रीपदाङ्क-
स्तृतीय उच्छ्वासकः ॥

---

## ॥ चतुर्थोच्छ्वासकः ॥

अथ तथोपविश्य सान्तःप्रतोषमवहितीभूते भूभृति साद्भुतकथाकर्णनरसोत्सुकेषु च तत्परसुपेतेषु प्रोक्ते हृदयवेदिना वसन्तशीलेन स खलु शुकशरीरनिर्मुक्तो महात्मा कथयितुमारेभे । "श्रीमन्! निशम्यताम् । अस्ति भुवनेषु प्रसिद्धा विविधसौधसुधैकधवला कीर्त्तिरिव मर्त्यलोकस्य, प्रोन्नतायतनध्वजविराजिनी जयश्रीरिव जम्बूद्वीपस्य, विमलहर्म्यनिर्माणमणिमयी विभूतिरिव भारतवर्षस्य, प्रभूतारामरमणीया वृत्तिरिवोत्तरापथस्य, भूचक्रवलयिनो महार्णवस्य दृष्टान्तेनेव गभीरजलदुर्गमेण परिखावलयेन विराजमानपरिसरा, शिखरसम्मिलितैः स्खलितरविरथतुरगतुण्डडिण्डीरपिण्डैरिव चन्द्रकान्तकपिशीर्षकैर्दन्तुरेण मरकतशिलाप्राकारेण परिगतोपान्तभूमिः, अनेकशः श्रिया गर्भवतीभिरिव महोदराभिश्चित्रशालिकाभिरलङ्कृतान्तःपरिकरा, प्रथितपरिशुद्धाचरणचारित्रवता जनेन सर्वतो वस(ह?)न्ती त्रैलोक्यभूषणम्, अखिललोकोपकीर्त्यमानाभिरामनामवती मथुरा नाम नगरी ।

यस्यामुपेन्द्रविदलितस्य कंसासुरस्य सर्वतो रुदतीनामन्तःपुरपुरन्ध्रिकाणामनणुकज्जलकलापकालीकृतैरश्रुवारिभिरापूरितेव द्रावितेन्द्रनीलसप्रभं प्रवा-

हमाविभ्रती, भ्रूलतेव वसुन्धरायाः, मरकतरत्नावलीवोत्तरस्या दिशः, कृपाणपट्टिकेव कलिन्दसुभटस्य, चरणशृङ्खलेव पूर्वार्णवकुञ्जरस्य, कैटभारिभयादन्तः प्रविश्यावस्थितस्य कालियभुजङ्गमस्य दिवसैः सञ्चयमुपागतानि जीर्णनिर्मोकदलखण्डकानीव डिण्डीरसटाशकलानि कूलेषु क्षिपती, विमलजलकेलिमज्जनरसप्रसक्तगोपीगणाभ्यन्तरविहारिणो हरेः शरीरसम्पर्केण पवित्रीभूतमम्भसां भरमादधाना, यमुनाभिधाना महासिन्धुरुत्तरां दिशमाश्रिता वहति।

किञ्च—

यत्राच्छस्फटिकाञ्चितोभयतटैः श्यामाश्मसृष्टोदरै-
रन्तर्भूतवराङ्गनैश्च वनितागेहेषु वातायनैः।
तारापुत्रिकया परीतविभवैर्नेत्रैरिव स्फारितै-
रुत्पश्यन्ति सदाऽतिथीन्प्रतिपथं दानोपभोग्याः श्रियः॥

तस्यामधीश्वरो हरचरणसरोजस(सु?)हसितमानसः प्रसरता प्रतापेन प्रकटितारिपार्थिवभयज्वरः, हर इव धवलाभिरुद्धूलितो विभूतिभिर्यशसाम्, इन्द्र इव भूयसीभिरधिष्ठितो दृष्टिभिः शास्त्राणाम्, असीमविक्रमः शौर्योष्मणैवाङ्गेषु पुलकमादधानः, कृपाणतिमिरेणैव समिति वीक्षमाणो जयश्रियं, रणरसाप्लवनपुलकितोऽप्यसहनस्तेजस्विनाम्, अनवरतसेवाविनम्रसामन्तमौलिमणिमालिकारुणकिरणयावकितचरणाङ्गुलिः, उदर्गलेन वयसा निकामवृद्धो वृद्धाभिरेव जयश्रीकीर्त्तिकमलाभिर्वृद्धावरोधविश्रुतोऽस्ति राजा सुचरितापहस्तितकलिः कलिन्दकेतुर्नाम।

यस्य क्षीरपयोनिधौ मधुरिपोरग्रे विहृत्योपरि
ब्रह्माण्डाच्चलितो गतः पृथुयशोहंसोऽभ्रमार्गेण यः।
तस्यैते पयसा प्लुतस्य चलतः पक्षोज्झिता बिन्दवो
नक्षत्राण्युषितस्य देहवलयोद्भूतं च विश्वं शशी॥

अपि च—

गृध्रान्धकारनीरन्ध्रे रणे रागान्धयाऽप्यसिः।
यस्य नीलांशुकच्छन्नश्चित्रं दृष्टो जयश्रिया॥

तस्य च महीपतेरुत्पन्नेषु बहुशो विचित्रगुणशालिषु पुत्रापत्यकेषु पर्यन्तसंभूतः कालक्षयाङ्कुर इव चन्द्रादिरत्नेषु, केतुरिव ग्रहेषु, क्षय इव संवत्सरेषु कलिरिव युगेषु च मलिनात्मा निन्द्यप्रसूतिरपत्यापशदो बभूव पुत्रः कुमारकेसरी नाम। सोऽहम्। अहं च सुचरिताचरणेषु पित्रा निरूपितैरनेकशः प्रव-

र्त्यमानोऽपि वृद्धैर्बलवतः पुराणस्य कर्मणा विपाकेन बलाद्बाल एव मलिनवृत्तौ द्यूते परां प्रसक्तिमुपजनयन्नुद्वेजकः पित्रोरभूवम् ।

एवमनुदिवससमुपचीयमानप्रवृत्तितया प्रौढिमधिरूढेन तेनैव च रसेन वासितान्तःकरणस्य क्रमेण निष्ठितनिजाशेषद्रव्यतया कदाचिदाक्रम्य बन्धुभ्यः, कदाचिद्बन्दीगृहीत्वा श्रीमद्भ्यः, कदाचिच्च विधाय राजोपाधिं जनपदेभ्यः समाहृतेन समन्तादर्थेन द्यूतमस्खलितखेलनविलासमनुशीलयतः प्रयान्ति मे दिवसाः।

अथाहमेकदा प्रतिक्षणमक्षीणखेलनव्यसनः शीलयन्नान्धिकादिबहुप्रभेदपरिगतं द्यूतमिदानीं जयामि तदानीं जयामीति प्रत्याशया सुदूरमन्धीभूतेन मनसा हारयन्ननवरतमकिञ्चनतया क्वचिद्द्यूतकारैरापणचतुष्पथेषु विधृतमात्मनो धनेन जनन्या मोच्यमानं, क्वचिद्विलासिनीपाटकेष्वातपोपवेशितं जनकेनोत्थाप्यमानं, क्वचिद्देवभवनाङ्गणेषु निखातं भ्रातृभिराकृष्यमाणमात्मानमवधार्य चिन्तितवानस्मि । ननु किमेवमत्राहमन्यैरनुचिन्त्यमानो लघूकृतेनात्मना तिष्ठामि। धनाधीना हि वाञ्छितरसोपभोगसम्प्राप्तिः; धनस्य च कृते कियान्नाम न मया वराकःकदर्थितो लोकः, तावदादौ श्रीमतामीशः पितैव पुत्रतया प्रतिक्षणमपकृष्यमाणेन रिक्तीकृतः कोशेन, जननी च बालदुर्ललिततया शून्यीकृता भूषणकलापेन, बन्धुजनो हि सौदर्यवशितया वियोजितो विभवेन, जनपदोऽपि राजसूनुतया निष्किञ्चनीकृतो धनेन, वीरवृत्त्या च बलाद्बन्दिग्रहेण गृहीत्वा श्रियमसारीकृतः सकलोऽपि सीमान्तर्वर्त्ती सामन्तलोकः। तत्तेभ्यो गृहीतमर्थजातं कियत्किल भविष्यति। अपीडया परेषामपरं तावन्तमर्थं कुतश्चिदर्जयामि। यमाजन्म नाम खेलतस्त्रुट्यति। नवाऽन्यत्किमपि मन्मनोऽध्यवसायगरिमानुरूपमस्ति विना महार्णवरत्नजातमृते रोहणाद्रिमणिवर्गात्, किन्त्वगस्त्यपरिपीतोद्वान्तस्य वारिधेरत्नान्युच्छिष्टंधनमित्यस्पृश्यानि । निक्षिप्य भूमावुपर्युपविष्टस्य कृपणस्य वित्तमिति रोहणस्य च मणिचक्रमनादेयमन्यथा भुजबलेनोन्मथ्य रोहणनगेन्द्रं, प्रतापेन प्रशोष्य च पाथसां नाथं किं नामनगृह्णामि दुरन्तसन्तानमनयो रत्नसर्वस्वं, यतः किमसाध्यमभिमतार्थसिद्धावनुबन्धिनो वीरस्य । तथाहि—

गर्जत्येष रसं तरङ्गमुखरो दुर्गाध इत्यम्बुधि-
स्तावत्तावदसावलङ्घ्य इति च स्तब्धो हिरण्याचलः ।
यावन्न प्रलयोपरूढतरणिस्तोमातपस्पर्द्धिना-
माधारो महसामशेषविजयी वीरः करोत्यादरम् ॥

अथास्तु वा किमनेन तावदन्यतो विभावयामि, तत्किलान्यत्किमत्रभूवलये सुभटभुजपञ्जरोपसाध्यनये। साधु स्मृतम् अस्त्येव सकलसुवर्णमयागारप्राकारपरिकरा रक्षसां निवासनगरी लङ्का। सा च पूर्वं स्त्रीहृदयेन रामेणाऽपि साधिता, किं पुनरशेषभुवनैकवीरस्य न मे साध्या भविष्यति। अतस्तस्यां गत्वा हठादाक्रम्य गृहीतमखिलमामूलतः सुवर्णशिलासंभारं विभीषणस्य च कुबेरकालात्सञ्चितं कोशजातमारोप्य वलयोपनतानां स्कन्धेषु रक्षसामिहानीयते। न हि यावदित्थं पूरयामि मनसो द्यूतकेलिषु व्यसनमित्येवं चेतसि विनिश्चित्य दिगन्तयात्रोचितं मुहूर्त्तमनालोचयन्नविमृशन्नेव च द्यूतव्यसनलङ्घितः परिणतिं कार्यस्य दूराध्वलङ्घनोपयोगिनीं प्रक्रियामाधाय मध्याह्नादुपरि षट्कर्णो भिद्यते मन्त्र इति वञ्चयित्वा समस्तमात्मनोऽनुजीविवर्गं निर्गतोऽहमेकाकी निकेतनात्।

ततश्च गृहप्रतोलीद्वारेण निर्गच्छन्नये! नियतमेवंवृत्ताध्वगाकारपरिकरमालोक्य मा कोऽपि मां देशान्तरोच्चलितमम्बा पिता बन्धुजनो वा ज्ञास्यति, ज्ञात्वा च हृदयवात्सल्येन मा कोऽपि स्खलिष्यति, मा कोऽपि प्रेम्णा पृष्ठे लगिष्यति तद्यथा न खल्वेवंविधोऽयमनेकविधोऽन्तरायः सम्पद्यते तथा निभृतमन्यैरज्ञायमानस्त्यजामि जनपदानुषङ्गिणीं भुवमिति विचिन्त्य तथैवालक्षितक्रमेण झगिति निर्गत्य पुरीपरिसरादनार्त्तेन चेतसा दक्षिणां ककुभमधिकृत्य प्रवृत्तोऽस्मि। गन्तुमनां च (नाश्च ?) तमुल्लङ्घयन् प्रथमप्रवासरभसाद्भूयसा गतिजवेन प्रस्तुतं पन्थानमस्तंगते भगवति सहस्रभानौ योजनशक्तिकेति नाम्ना प्रसिद्धं ग्राममासादितवानस्मि।

तत्र च प्रवेश एव दृक्पथमुपागते ग्रामसरसि निर्वर्त्य सायन्तनं सन्ध्याविधिमनुद्धुरेण तमसा किमप्यस्फुटतामुपेतवत्यालोके लोकैरनवलक्ष्यमाणः पुरा परिचितस्य पुराणवयसो मथुरान्तर्विख्यातस्य सदैव तद्ग्रामवासिनः पिप्पलकनाम्नो द्यूतकारस्य मन्दिरमापृच्छ्य प्राविशम्। तेनाप्यभ्यागत इति राजसूनुरिति द्यूतमित्रमिति च ससंरम्भमभ्युत्थानपूर्वं कृतादरगौरवेण यथोचितैः स्वागतप्रश्नासनदानादिभिरशेषतोऽपि सत्कारैः प्रीणितोऽस्मि निर्वर्त्तितपूर्वरात्रकरणीयस्य च शय्यागतस्य ममान्तिके प्रेम्णा समुपविश्य "कुमार! सुदूरयात्रिकेणामुना स्वरूपेण क्व नाम गन्ताऽसि, कतमं च तत्किल तादृशमनन्यगोचरप्रयोजनं येनैवमेकाकी चलितवानसी"त्युक्तवान्। मयाप्ययं मदीयमिदं सुदूरदेशानुसर्पणरहस्यमवेत्य मां कदाचिदिह नगरीनेदीयसि

ग्रामे स्थितोऽयं मत्प्रवासमसहमानो वराकः स्वयं प्रचलितुमक्षमः क्षणेनैव तातस्य ज्ञापयित्वा निवर्त्तयिष्यति, निजकुटुम्बमपहाय वार्द्धकविधुरोऽपि प्रेम्णा समं चलिष्यति । तदलमत्र विश्वासेन । छन्नार्थकथनेन प्रतारयाम्येन-मिति सम्प्राधर्य, " भोः पिप्पलक ! श्रूयताम् । इतो दक्षिणेन सिन्धुरस्ति । ततः परं पारमुत्तीर्य क्वचिदेकस्मिन्नमानुषप्रचारिणि प्रदेशे किमपि सुमनसाम-साध्ये धनं मयैव साध्यमास्ते । तत्राहमेवमुच्चलित " इति प्रोक्ते पुनस्तेन न किञ्चिदुक्तोऽस्मि । किमेतच्चेतसि विभावितं यदयमतिप्रसिद्धो द्यूतरसिकः सदैव बन्दिग्रहोपार्जितेनार्थेन व्यसनं सारयति तदेष तत्र कुत्रापि चलितवान् । अतः किमिति दुर्वारप्रसरमविशृङ्खलमनयदुर्ललितं राजपुत्रमर्थाभिव्यञ्जनपरेण प्रश्नादरेण पीडयामीति प्रायोऽनुचिन्त्य परमसौ तूष्णीमकरोत् । केवलं सेव-काचारमनुसरन्नुपविश्य द्वारि दत्ताङ्घ्रयामको जाग्रदेव गृहीतायुधस्तस्थौ । अहं च प्रथमाध्वसञ्चरणश्रमेण बलादायातया निद्रया सुखप्रसुप्तस्त्रिभागशेषायां रात्रावतिस्पष्टपरिकरं स्वप्नमद्राक्षम् । किलैकत्र कानने वनश्रीरिति(व ?) प्रस-न्नमधुराकृतिरेका स्त्री पयोधरे बद्धक्रमं कण्ठीरवमवादीत् ।

" त्वं विक्रमेण करिवृन्दविदारणैक-
मल्लो मृगेन्द्र जगतीह सदा बलिष्ठः ।
अद्यत्वसौ तव पयोभृतिकल्पितोरु-
फालस्य पौरुषमपास्य विधिर्बलीयान् ॥

इति श्रुत्वा तेन च स्वप्नसम्भ्रमेण झगिति प्रबुद्धोऽहम् । अये स्वप्नो-ऽयम् । एवं दृष्टवानस्मि । तत्काचिदस्माकमन्वयदेवतेयमीदृशाध्यवसायेन प-योभृति समुद्रे बद्धफालस्य ममाग्रे पौरुषादितो बलवान्विधिरवधित्वेन प्रभवि-ष्यतीति सिंहशिक्षापदेशेन प्रायः कथयति । अथवा किमेवममुना कापुरुषवि-कल्पेनोत्साहमपहस्तयामि मृषा परिणामः सर्वो हि स्वप्नसंरम्भः किमिति स्वप्नस्यैव पृष्ठे लगामि । तावदितः प्रबोधमासाद्य समुत्थितोऽहमिदानीम् । एष एव समयः प्रयातुमस्ति । जगत्यपरो बलीयान्विधेर्भण्यते । एकोऽपि यो ममापि विपक्षीभूय पुरो भविष्यत्यादौ तमेव परिपन्थितयोपस्थितं निर्लंध्य यास्यामीति दर्पोत्सेकतरलितस्त्वरितमुत्थाय, " हंहो पिप्पलक ! तिष्ठतु भ-वान् । यामो वयमिति प्रणयादनुव्रजितुमुद्यतं तमविस्खलनपूर्वमापृच्छ्य नि-र्गत्य च ततो ग्रामादमन्दया गत्या गन्तुमारब्धवानस्मि ।

ततश्च( को )नाथ(म ?)दुर्व्यसनविनटितो महात्माऽपि हास्यानुसदृश(शं?)

नाचरति। यतोऽहं तथा शश्वद्गहता प्रयाणकेन स्वमादौ देशमतिक्रामन् यस्मिन्नेव नगरे ग्रामे वा यस्यैव गृहे प्रविशामि तेनैव द्यूतकारोऽयमस्मद्गृहात्किमप्यपहृत्य यास्यतीति सुप्रसिद्धत्वान्निकामशङ्कितेन नेत्रनिक्षिप्तो भोजयित्वा प्रेष्यमाणो जनेन दूरादुपलक्षितत्वात्समानविद्यैरालिङ्ग्यमानो निमन्त्र्यमाणश्च द्यूतकारैरालोक्य च द्यूतमानन्देन विस्मरामि प्रस्तुतं प्रयोजनम्। उपरि तस्यैव गत्वा भवामि। तत्र च जयता कितवलोकेन दीयमानामनेकशो रेखामासाद्य तेनैव च रमणेन स्वयमुपविश्य खेलामि न चैतत्किमपि चेतयामि यत्किल लङ्कां प्रति प्रस्थितः पथि स्थितश्चाहं ( हमिति ? )। पश्चान्निष्किञ्चनीभूतश्च किमधुना खेलनाय सारयामीति चिन्तया कार्यं स्मरामि। तथैवचात्मानमात्मनैवोपहस्य ततोऽपहस्य ( सृत्य ? ) निस्म( स्स ? ) रामि। इत्येवममुना क्रमेण गमितबहुवासरया कालसम्पदा प्रथीयसीमुत्तरदक्षिणयोरन्योन्यमवनिमण्डलानुभागकलहादङ्गमि(भिग ?)तयोर्दिशोर्निवारयितुमन्तरप्रवेशितां भुजलतामिव महोदधेः, अनिलतरलितोर्मिशिखरशीकरप्रकरैर्मदावस्थामिव वरुणकुञ्जरस्य, तीरविरचितानल्पतापसकुटीरकैर्निवासनगरीमिव धर्मस्य, प्रचारवीथीमिव निर्वाणनगरस्य, महासरितमत्रभवतीमवाप्तोऽस्मि रेवेत्यपरनामवतीं नर्मदाम्।

या रेवेति निषन्तयातु(मिषात्पुनाति ?) विशदापारप्रवाहश्रिया
साक्षात्सा क्षितिमाजगाम गगनादुत्तीर्य मन्दाकिनी।
कुत्रान्यत्र समीरसङ्गमसमुड्डीनोदबिन्दुव्रज-
व्याजात्तीरशिलातलेषु मिलितस्तारागणो दृश्यते॥
या शाश्वतपदा देवी तरङ्गसरिकास्रजं।
बिभर्त्ति वृत्तकल्पान्तसङ्ख्या रेखावलीमिव॥

ततश्च सरभसमभिनन्द्य वन्दितजलोऽहमुत्तीर्य सुखावतारेण वर्त्मनातामतिमनोहरां सरितमेनया मेकलकन्यया पूरितं प्रविष्टोऽस्मि दक्षिणं देशम्। इतःपाथोधिपरिखावती लङ्कैव(गन्तुं) प(व?)रमित्युदञ्चितोत्साहमुदग्रवेगं च प्रचलितस्तस्मात्।

अथ क्रमेण सन्त्यजन् समदशबरीकटाक्षकल्ली(ल्लोल ?)कदम्बदुस्त्यजानि भिल्लपल्लीवनानि, लङ्घयन्नुद्दामपामरकुटुम्बिनीकुचशैलदुर्लङ्घ्यान् ग्रामान्, अतिक्रामन्नपारपौराङ्गनालावण्यजलदुर्गदुरतिक्रमाणि नगराणि, अतिगच्छन्नतुच्छतरुसुन्दरोद्यानवलयान्धकारदुरतिगम्यानि मलयमण्डलानि, निस्तरन्नसमशीतातपाद्यसंवरणायासदुस्सहं क्लेशम्, अविश्रान्तगमनो भानुरिव, भुवनलङ्घनोत्खा

तक्रमस्त्रिविक्रम इव, पृष्ठीकृतमहीतलः कूर्मराज इव, स्वेदाम्बुसंप्लवेन जलाकृतिर्वरुण इव, त्वरापरिक्रमेण च प्रचलत्पदः पवमान इव, संवृत्तवानस्मि ।

एवमहमनेकगिरिकूटतटिनीमहाऽवटैरारोहावरोहविषमम्, अपारहरिचित्रकादिक्रूरतरसत्त्वसञ्चारेण प्राणप्रणाशदारुणम्, अनीरभूरुहान्तरालविस्तरेण च तृडातपक्लान्तिदुस्तरं पन्थानमतिक्रम्य गच्छन्नेकत्र परमेकहेलयैव निजप्रसरसंरुद्धाशेषदिग्भागभोगिनि, प्रखरहरिकरजकोटिकुट्टितानेककरिकरोटिकूटाद्रिमति, प्रचण्डदवदहनधूमान्धकारपुञ्जकनिकुञ्जक(निबिड ?) निकुञ्जवति, प्रभञ्जनप्रहतपक्वकपिकच्छुगुच्छकोच्चलितकेसरपरमाणुरथ्यारजस्विनि, प्रजरदजगरमुखोदरस्फुरत्फूत्कारभरसमीरिणि, हरिशरभप्रायवनजन्तुनि, खदिरशाकशाखोटप्रायतरुणि, दर्भसूचीप्रायतृणजातिनि, वल्मीकप्रायभूमिनि, भीषणतया प्रकर्षमापन्ने, दृषदसञ्चारवर्त्मनि महावने पतितोऽस्मि ।

तत्रैव चान्तर्गच्छतो मे तिग्मांशुरस्तं जगाम पश्चादग्रेऽपि भूरितया वनाभोगस्य भग्नलङ्घनोत्साहः क्व नाम निरापदि प्रदेशे गमयामि यामिनीम्; किमस्य तरोः स्कन्धमधिश्रयामि; किमिदमद्रिदरीमध्यमधिविशामि; किमत्र घनलताजालिनि गुल्मवलये वसामि; किमग्रे क्वचिदितोऽप्येवंरूपमपरमुत्कृष्टं वसतिस्थानमासादयिष्यामीति वितर्कपरतन्त्रेण चेतसा शून्य इव प्रसर्पन् सहसैव परमस्तरविबन्धनोत्सर्गविगलितैरिव ध्वान्तपटलैराच्छादितोऽस्मि ।

तथैव च यावदन्धकारेऽपि लब्धाश्रयपरित्यागानुतापात्कृतयथोपस्थितावस्थितिविनिश्चयो व्रजामि तावत्सुदूरमतिघनान्धतमसगर्भे मुरद्विषो वक्षसि कौस्तुभशलाकामिव प्रदीपभ्रान्तिमुत्पादयन्तीमुल्लसन्तीं च कुतश्चित्कान्तिकलिकामपश्यम् । दर्शनेन च तस्याः ससंशयमम्हे ! किमिदमेवमुद्योतते; किमेष क्वचिदाश्रये वितीर्णो दीपः प्रज्वलति; उत स्फुरन्तीभूतदहनार्चिषः शिखेयम्; अथवा निधानं ज्योतिषां वह्निः; आहोस्विद्दिव्यौषधीप्रभेदः कश्चन । भवतु वा किमपि । अस्तु तावदनुसरामि परतस्तु दृष्टे सत्यस्मिन्नुचितमाचरिष्यामीति निश्चित्य तथाप्रवृत्तः कियत्यापि कालकलया तमुद्देशमासादितो झगित्यग्रे तयैव कान्तिशिखया द्योतिताभ्यन्तरमभित्तिकेन च बहिर्मण्डपेन मण्डिताङ्गणमुग्रतमस्य तमसः श्यामिकया कज्जलकूटायमानमत्यन्तजीर्णतया च खण्डस्फुटितमायतनमद्राक्षम् ।

सहर्षवेगं च गत्वा समीपमन्तः प्रहितेन चक्षुषा विलोक्य भगवतीं दुर्गामन्तिके च त्रुटितेष्टकायां भित्तावतिचिरविपन्नपन्नगस्यास्थिशेषे शिरसि वि-

द्योतमानं दिव्यरत्नम्, अये शून्यं चण्डिकायतनमेतत्; एषा च सा भुजगमणेरस्य प्रदीपसंशयवती कान्तिकलिका । तत्साधु संवृत्तम् । इदानीं यदि नाम कुत्रचिदिहातः(पां ?)स्थानमासाद्यते तदहमङ्घ्रिकरमुखप्रक्षालनाचमनशुचितामाधाय देवीं नमस्करोमीति संप्रधार्य तथा कुर्वन् कथञ्चित्तादृशे तमसि दृष्टायामर्द्धनष्टायामल्पविरसाम्भसि पुष्करिण्यां तद्धि सकलं विधाय त्वरितमेवान्तः प्रविष्टो जय जय त्रिभुवनजनाप्यायिनि कात्यायनीति भक्तिप्रयुक्तं वचः प्रस्तूय स्तुतवानस्मि ।

स्वामिन्यार्यै भुजङ्गाभरणवलयिनि स्थूलशूलास्त्रदण्डे-
चामुण्डे चण्डि चञ्चन्निबिडनरशिरःस्रक्परीताङ्गि दुर्गे ।
देवि स्वर्नाथचूडामणिकिरणकणश्रेणिधौताग्रपाद-
द्वन्द्वे वन्द्येऽभिनन्द्ये जननि जय जय श्रीमहाकालि दिव्ये ॥

कृतस्तुतिश्च क्षितितलमिलितालिकेन शिरसा प्रणम्य समुत्थितः स्थितान्यपथिकजनोपलम्भाय बहिर्मण्डपमगच्छम् । सोऽपि शून्य एव केवलमन्तः प्रतिष्ठितं क्षेत्रपालमालोक्य तस्यापि वाक्योपहारमकरवम् ।

धृत्यावेशप्रसक्तैर्ज्वलदनलमुखोन्मुक्तफेत्कारघोरैः-
क्रूरैरुत्तालतालव्यतिकरमुखरीभूतभूषास्थिमालैः ।
क्रीडन्तं प्रेतरङ्कैः कुणपभुवि महाजङ्गलग्रासलोभ-
भ्राम्यद्भल्लूकभू(घू ?)कप्रकरपरिगतं क्षेत्रपालं नमामि ॥

ततश्च तत्रैव मुहूर्त्तमुपविष्टः स्वान्त एव भावितात्मा सविस्मयमहो ! साधु, विधिना दुर्धरापदि महावनेऽत्र पातितो रत्नज्योतिरिदमुपस्थाप्य निर्वाहितोऽस्मि । कथमन्यथा समस्तालोकविजयिन्येवंविधे तमसि दृशोर्गोचरीभवत्येतदायतनम् । तथा च मन्ये नक्षत्रमात्रकेणाप्यालोकशून्यं भविष्यतीति सञ्चिन्त्य किल करोमि यावदुन्मेषे चक्षुषी तावदेकं झणिति मणिकिङ्किणीरणत्कारझङ्कारितादम्बरतलादवतरन्तम्, अन्तिकेषु विस्फुरन्तीभिरात्मप्रभाभिरदभ्रेऽपि तमसि दूरादाविर्भवन्तं, चरणनूपुरा(रा ?)वधावितया गगनगङ्गामरालबालकश्रेण्येव धवलनरकरोटिमालया कृतोत्तरासङ्गं, खट्वाङ्गशिरःप्रणयिना कपालेन संसारफलाष्ठी(ष्ठली ?)लकमिव दर्शयन्तं, भस्मनः प्रोद्धूलनेन सिताच्छधूलिधूसरितं निर्वाणदेशाध्वनीनमिवानुमीयमानं, सर्वतो गृहीतैर्भूषास्थिमणिभिराच्छोटिताशेषतारकधनं नभोनगरलुण्टाकमिवोपलक्ष्यमाणं, वामकरनिवेशितया शुक्लकपालशुक्त्या सम्पूरणाय गृहीतेन शशिबिम्बस्यार्द्धेन प्रजाप-

तिमिव प्रतीयमानं, प्रमाणत्रयसमल्पास्थिकर्परकसृष्ट्या स्रजा संयमितजटाकलापं कापालिकमपश्यम् ।

स चावतीर्य कृताभिवन्दनो देव्या विस्मित इव ममान्तिकमाजगाम । कृताभ्युत्थानपूर्वमुपरचितप्रणामेन च मया दर्शितोचितप्रश्रयः समुपविश्य वत्स ! कुतोऽत्र दुरतिक्रमापायभूरिण्यरण्यविधुरे निपातितोऽसि, कतमः किमर्थमिति ससंरम्भमुवाच । अहमप्यादितः समस्तमात्मनो स्व(न्व?)यनिवेदनादारभ्य दुर्विनयविस्तृताध्यवसायपरिकराङ्कं लङ्कां प्रति प्रस्थानमाख्यातवान् । ततश्चासौ मुनिः सशिरःकम्पमेकाग्रतया क्षणं सन्मुखमुदीक्ष्य झटिति घटितपर्यङ्कबन्धः स्थिरीभूय नभसि निक्षिप्तचक्षुरस्थात् । अथ क्षणेन कुतोऽप्यागत्य नवाभ्रपट्ट १..........................................................................................

..........................................................................................

र्घगजदशनमुसलायमानं भुजद्वयमेवास्ते ।

दंष्ट्रयोरादिकोलस्य यत्र न प्रौढिरिष्यते ।
तत्रैतदायताभोगमास्ते धीरस्य दोर्युगम् ॥

अपिच—

त्रैलोक्यश्रीरसौ दासी तावदुच्छृङ्खलायते ।
यावद्वीरः कृतास्कन्दो न दोर्दण्डमुदञ्चति ॥

तदेषाऽद्यतनी द्यूतवृत्तिरल्पेन प्रभूतमुत्पादयन्ती लाभवती मे वणिज्या समभूत् अन्तः समारुह्य चेमामिदानीमेव किं न व्रजामि । दिव्यशक्तीनि हि विमानयानान्यारूढिसमकालमेव चिन्तितां दिशमुद्दिश्य नभसि प्रयान्ति । तिमिरमुद्योतश्चेति चर्मदृशामस्माकम् । अमीषां तु देवतासिद्धानां सर्वं प्रभासविस्पष्टमेवेति सञ्चिन्त्य, प्रणम्य क्षेत्रपालपरिग्रहां च भगवतीमम्बिकामनुगतसमाहितेन चेतसा संभाव्य तद्विमानमारूढवानस्मि ।

तद्धि क्षितिपालशेखरमणे शृणु, प्रचारपाटवेन या(ता?)दृशमारूढे मयि झगित्येवोत्पत्य हरगलगरलकज्जलमलीमसं सुदूरमन्तरशिरोभागमारुरोह । ततः परमुपक्रान्तं प्रयातुम्, अनन्तरमारचितगुरुवेगनिर्गमप्रसरं परितो विस्फुरन्तीभिरतिधवलवैजयन्तीभिर्ग (ग) नगङ्गाडिण्डीरवल्लरीपटलमिव मरुता नीयमानम्, अनणुमणिकर्मनिर्मलोद्योतडम्बरेण प्रदीपतन्त्रमिव तिमिरविग्रहेणोच्चलितम्, उच्छलत्किङ्किणीरणत्कारनिःस्वनैर्वेगोज्झितसमीरमिवारब्धविज-

१ अत्र ग्रंथो विगलितो भूयान्

यकोलाहलम्, उच्छलद्ध्वजपटफटत्कारितोपकण्ठकनकदण्डिकादारितनभस्तलम्, उल्लोठिताध्वजलधरम्, उत्सारिताग्रतारकं, स्वरूपमविकृत्य त्वरितमन्तरिक्षेण गच्छतस्तस्य तिमिरपटलोन्मूलितालोकवृत्तिरहमन्येन नीयमानोऽन्ध इव, क एष ककुभो विभागः, कियदतिक्रान्तं पश्चात्, अग्रेऽपि कियद्गन्तव्यम्, किदृशी चासौ वसुमती, कीदृशाहि ते गिरिसरित्कान्तारपरिगताः पन्थानः, कीदृशोऽप्यसौ जनपदप्रचार इति न किञ्चिज्जानामि, केवलं चरणचङ्क्रमणपीडाभिरुज्झितः पदे पदे मृदुसमीरलहरीनिवेशशीतलोचनो यानेन गतिसुखमनुभूतवानस्मि । तथा व्रजतश्च मे किमाश्चर्यमावेद्यते सहसैवमेकत्र भग्नदिव्यप्रभावमिव, चलितसञ्चारयन्त्रमिव, तावत्पथासमर्थमिव, केनापि विधृतमिव, क्वापि प्रस्खलितमिव, विमानमस्पन्दरूपतया स्थिरीभूय तस्थौ ।

तथा स्थिते च तस्मिन्नुद्भूतविस्मयोऽहं नन्वनाकारसमतलेऽस्मिन्नभोऽध्वनि कोऽयमसंभाव्यमानपरिस्खलनविषयस्यास्य किल निश्चलतया स्थितौ हेतुरिति सर्वतो निभालयन्न किञ्चित्तादृशं कारणमुपलब्धवान् । एकं च परं तस्य तलमयनिर्माणमणिदलोद्योतेन मूले दुरन्तविस्तारमम्भसः प्राग्भारमपश्यम् । तदालोकेन च सवितर्कमहो कोऽयमियता जलाभोगेन भूतले प्रदेशः किमयमुद्धन्तः( स्महत्याः ?) कस्याश्चित्सरितो महाह्रदः, किमिदमुल्लोलकवलिताभ्रसंरम्भमदभ्रं वा सरः, किञ्चिदथ प्रासस्तमेनमहं लङ्कापुरीप्राकारं दक्षिणाम्भोधिमित्ति निपुणं निरूपयन्ननुसमुद्र एवायं कस्यापरस्य परितोऽप्येवमलघुपरिसञ्चरद्भूरितमतिमिङ्गिलदलितविद्रुमदलदन्तुरोर्मिशोणिमवती वारां विभूतिः । एवं चेत्किमित्यवान्तरएवानुत्पन्नरोधमपि स्थितमेतदिति यावदवधारयामि तावदेकहेलयैव कलकलितकिङ्किणिनिनादोन्नादितनभस्तलेन सर्वाङ्गमुत्कम्पितम् । तेन तत्कम्पविचलितासनतया साकूतमितस्ततो दण्डिकासु लगितुमाकुले मयि सह मयैव परिभ्रंशनिस्सहं विमानमगाधगर्भे तस्मिन्निपपात ।

तेन च क्रोडीकृतः क्षणादेवं हानिफलसमारम्भोऽहमुपरतइतीयन्मात्रचेतनो निमग्नोऽस्मि । तत्कालमग्नोऽहमधस्तान्न जाने, कथञ्चन सहसैव परं प्रबुद्धकरणवर्गः । न च तेषां विमानसागरावर्त्तवलयानामेकोऽपि । केवलं विमलविद्रुमशिलासम्पातस्य विसङ्कटाकारशालिनः प्राकारवलयस्य द्वारवर्त्तिनमात्मानमपश्यम् ।

तथाऽवलोक्य विस्मयचपलेन चेतसा सर्वतो निक्षिप्य चक्षुरहो क्व किल दिव्यं तद्विमानयानं येनागतोऽस्मि । क्व स प्रसरदुर्गमः समुद्रो यस्यांभसि

पतितोऽस्मि। क्वासौवाडवमुखवलयभासुरो महावर्त्तः। किल यत्र मग्नोऽस्मि। किन्नाम मग्नोऽपि नाहम्। किमंभोधिपतनव्यतिकरोऽपि नायं। किमहमपि स खलु न भवामि। किमङ्ग (मुत्तुङ्ग?) बहुतरङ्गताडितया सर्वमीदृगेव दृश्यम्। किमंमोजडिमजनितवैधुर्यस्य भ्रमोऽयमन्तःकरणस्य। किमिदमीदृशमंभोविभीषणाद्भुतस्वरूपमिंद्रजालं वा किंचित्। किमिति न तन्मे विमानम्। तदेतन्निश्चिन्तमचिन्त्यापातदुर्द्धरं किंचन पुराकृतमुपस्थितं कर्म। किं विकल्पाद्ये चिरादिदानीमनुस्मृतं स एव स्फुटीभूतः स्वप्नो यो मया तत्र योजनशक्तिकाग्रामे द्यूतकारपिप्पलकस्य सद्मनि सुखेन दृष्टः। यथा किल तया स्त्रिया मृगेंद्रशिक्षाक्षरैस्तवाग्रे पौरुषं निरस्य विधिर्बलीयानिति प्रोक्तोऽहमतस्तदेतद्बलीयसो विधेर्विजृंभितम्। अथ भवतु किमेभिरवान्तरवितर्कैः। प्राकारान्तरमधिविशामि पुरस्तात्तु यद्यथा तत्तथैव स्वयमाविर्भूयमानमवगमिष्यामीति संचिन्त्य चंद्रमणिघटितकवाटवल्गुना द्वारेण प्रविष्टोऽस्मि। तत्र च मसृणमणिधूलिपांसुलेन पथा स्तोकान्तरमुपसर्पन्नर्द्धपथ एव दूरतोऽपि रत्नाश्रयात्समीरसारितान्तरपलाशपटलात्कल्पतरुमञ्जरीभरादिव निस्सरन्तीभिः, आलोकलीलोद्वेल्लनतरङ्गितादहीन्द्रफणाफलकवलयादिव समुच्चलन्तीभिः, उन्मथितगर्भाद्रोहणतटादिव विजृम्भमाणाभिरनेकशः प्रसरसंरंभवतीभिः प्रभाभिरग्रेतनं प्रज्वलन्तमिव प्रदेशमद्राक्षम्। दृष्टमात्रे च तस्मिन्झगित्युद्गतेन भूयसा भयेन कतिचित्पदानि पश्चान्निवृत्य ससम्भ्रममभाःकिमहमागत्यान्ततस्तस्यैव पतितो मुखे वाडवस्य। कस्यापरस्य चण्डार्चिषोऽवस्थितिरुदरे महार्णवस्य। निस्सीमसम्भूतिरसावप्याभोगस्तेजसां। जानामि चायमेभिरेव तेजोभिः शोषितानामित्थमिह प्रणाशः पाथसाम्। अथेदमप्यनुमानमितस्समागच्छतोऽस्य वायोरत्यन्तशीतलतया प्रतिहतमिव भाति। ततश्चान्यदेव वस्त्वन्तरं किमप्येतत्। अस्तु वा किञ्चन। व्रजामि कृत्वा साहसम्। इतरथाऽपि ममेत्थमापन्निमग्नस्य संदिग्धं प्राणितमन्यत्र यत्किल गमिष्याम्यहमतस्तावदपूर्वदर्शनेन सफलयामि चक्षुषी, पश्यामि किमिदमीदृग्विधम्, अनन्तरन्तु भवतु यद्भाव्यमिति कृत्वा विनिश्चयं चलितस्ततोऽस्मि। तथा गच्छन्समंदसञ्चारमाशङ्कितेन चेतसा कियदभिक्रम्य पुरस्तादुत्सर्पिण्यास्य (णस्व!) प्रभाकलापस्य गर्भे पिण्डितं निर्माणमिव रविकराणां, स्तम्भितं स्वरूपमिव विद्युतां, पुञ्जितमुत्थानमिव प्रदीपानां, दिनान्तनिष्टि(ष्ठि?)तरुचेरुपक्रमस्थानमिव भास्करस्य, क्षुधोपतप्तस्य जठराग्निस्तम्बमिव समुद्रस्य, मन्दराघातनिर्गतस्य कुटुम्बालोच(क?)मिव कौस्तुभस्य,

मथनविदूरपलायितानां गिरिदुर्गमिव मणीनाम्, आरब्धमथनेभ्यः सुरेभ्योऽपन्हुतं रत्नसर्वस्वमिव वरुणराजस्य, महाकोलेन रसातलादुदस्यमानायाः सागरोर्मिभिराहत्य पातितं मणिकिरीटमिव वसुन्धरायाः, यादोभिरम्भोधिजलं हरतामम्भोमुचामाच्छिद्य गृहीतभग्नस्येन्द्रधनुषो दलमिव पुञ्जतया विश्रान्तं, प्रलयसमयोपयोगिनामेकत्र मिलितं तेजस्विनां वृन्दमिव कालातिवाहनधिया सङ्कुच्यावतिष्ठमानं, पातालतलवासिनो ज्वलतः कालाग्निरुद्रस्य समुत्थितं ज्योतिरिव स्तम्बाकारेण परिणतं, कुम्भयोनिजनितापकारक्रोधादम्भोधिना तज्जनक इति बलादाबध्य कारागृहोपरि कृतेनेव धामवता रत्नकलशेन विभूष्यमाणशिखराग्रविलग्नया जलशायिनो हरेर्मूली(स्तल्पी?)भूतेन शेषाहिना विमुक्तया निर्मोकलतयेव धवलप्रलम्बया वैजयन्त्या विराजमानं, मद(ध्य?)घटितशालभञ्जिकाश्लेषरोमाञ्चितैरिव निबिडकिरणाङ्कुरकण्टकितैरमलमरकतस्तम्भैरुद्भासमानं, माणिक्यमणिभूमिसङ्क्रान्ताभिरुपरि मण्डपनिवेशितानामतनुमुक्तावचूलवलयानां प्रतिबिम्बपरिपाटिभिः सहजरङ्गावलिमनोहरम्, उभयतो द्वारशाखासन्नजनितविद्रुमदलपुत्रिकापाणिप्रणिहितस्य शशिकान्तसृष्टेर्लीलाकमलस्य कर्णिकीकृतया पुष्पराग(कलि)कया सततमनुच्छिन्नदीपकालोकं, सर्वतो निहितरत्नसन्तानैरधनीकृतरत्नाकरं, तलपीठसञ्चिताचरमचामीकरशिलाभिरकिञ्चनीकृतकनकाचलं, निरन्तरनिवेशिताशेषजन्तुरूपैः शून्यीकृतत्रिभुवनम्, अनेकरचनाविन्यासचारुताभिरियतीकृतविश्वकर्मविज्ञानम्, आनन्दकन्दशो(सा?)रसमकर्मनिर्माणमेदुरम्, अदूरपुष्पद्रुमारामवलयितमपश्यमुद्दीप्रमणिमयं महिष्ठमायतनम्।

सपद्यपधूताशङ्कमुच्छ्वसितहृदयश्च सम्यगाह्लादनिर्वृत्तया दृशा सम्भाव्य रभसेन गत्वा प्राविशमपश्यं च तत्रान्तःप्रतिष्ठितं शब्दमिवार्थप्रतीतेरखिलसंसारसृष्टेरादिभूतं भगवन्तमम्बिकानाथम्। घटितकरकमलसम्पुटस्तु तं प्राणिनामिष्टमभीष्टसिद्धये स्तुतवानस्मि॥

देवः पातु शिवो जगन्ति पटुना स्नेहेन सिद्धाञ्जने-
नेवाभ्यञ्जितया दृशा भगवती यत्र प्रिये पार्वती।
आर्द्रेभत्वचमच्छनेत्रपटवद्ग्रीवोरगं हारव-
द्भूतिं चन्दनधूलिवत्तिलकवद्भालेक्षणं वीक्षते॥ १॥

इति स्तुतिपूर्वमवनितलमिलितजानुमस्तकः प्रणम्योत्थाय विश्रामकामः समुपवेष्टुमेकान्ते माणिक्यमणिफलकपेशलं मत्तवारणकमशिश्रियम्। अथ

तस्मिन्नुपाविशन्नेव झगित्यङ्गणोत्सङ्गभुवि समुत्सर्पता रणन्मणिरवझङ्कारमुखरेण ध्वनिना विकृष्टदृष्टिः,एकहेलयैव लीलया चलन्तमनन्तविस्तारं, पुरक्षोभमिव स्त्रीराज्यस्य, व(च ?)लद्दर्शनमिव शृङ्गारस्य, मेलमिव सौन्दर्यस्य, सार्थमिव यौवनस्य, काञ्चीमुखाग्रघटितेन रत्नमकरेण प्रकटितमकरवाहनं सैन्यमिव मन्मथस्य, स्फुरन्मुक्तासरप्रसृतेन प्रभापटलेन परिणद्धचन्द्रिकं कुटुम्बमिव चन्द्रमसः, कर्णपाशदोलिन्या कुण्डलश्रिया विलसितान्दोलकं जातिहर्म्यमिव वसन्तस्य, कराग्रविधृतेन लीलाकुवलयेन गृहीताञ्जनकूपिकं परिग्रहमिव रतेः, अविरलकुरुलच्छलेन सहोत्थिततिमिरनिकुरुम्बं पातालादिव समुत्थितं, मौक्तिकाभरणविभ्रमेण सञ्चलिततारकं नभस इवावतीर्णं, पदतलारुणिमसम्पदा लग्नदिग्गजशिरस्सिन्दूररागमाशाभ्य इव प्रसूतं, सहजशोणाधरबिम्बतया मुखमिलितविद्रुमदलं समुद्रादिव निस्सृतं, श्वसितसौरभविभूत्या घटितपारिजातपरिमलं स्वर्गादिव भ्रष्टम्, एकार्णवं लावण्यवारिभिः, एकारवं किङ्किणिरणितारवैः, एकास्तसन्ध्यं शिरस्सिन्दूरपांसुभिः, एकाभ्रमाभरणप्रभाभिः, त्रिभुवनश्रियः क्रीडापुत्रिकौघरचनायमानं, मुखसमीरसौरभापतन्मधुपच्छलेन गुलिकाधनुर्द्धरेण मनोभुवा मरकतोपलगुलिकाभिरिवानवरतमाहन्यमानम्, आयान्तमनन्ययुवतिसामान्यं, कन्यासमूहमद्राक्षम् ।

मध्ये च तस्यातिधवलवृत्तातपत्रस्य मूले लक्ष्मीरिव चन्द्रमसो मण्डलाङ्कलिता, सावित्रीध्यानपरतन्त्रेण चेतसा सृजतः प्रजापतेस्तदाकारपरिणते च सैवेति प्रतीयमाना, रतिरिति प्रियाप्रत्ययादिव समालिङ्गिता मनोभवेन, रोहिणीति मुखच्छायागतेनाधिष्ठिता चन्द्रेण, सर्वतो विसारिणा कान्तिपरिवेषेण पृथ्वीव परिवृता पयोधिवलयेन, लावण्यजलभरादुत्तीर्य शैशवेन तटे न्यस्तमुद्गपदण्डिकातल्पकमिव सुललिताङ्गुलीसञ्चयमुद्वहता चरणयोर्द्वयेन विराजमाना, पुष्पायुधेन प्रहरणीकृताभ्यां कनककेतकीसूति(ना?)भ्यामिव यथोत्तरमाकारवृत्ताभ्यां जङ्घाभ्यामुद्भासमाना, (मुल) क्षणकिङ्किणीगणोपशोभिनो मनोभवस्यन्दनस्य नितम्बस्य युगेनेव पीनोरुयुगलकेन भ्राजमाना, मेखलोपरि जनितमणिपट्टिकावलयप्राकारमनङ्गभूभुजो गिरिदुर्गमिवगरिमरम्यं नितम्बमुद्वहन्ती, नियतमितः परतो भव्यं नास्तीति विधिना प्रदत्तं शून्यमिव सुवृत्तसुन्दरं नाभिबिम्बमाबिभ्रती, जगदेकधन्विना मनसिजेन धनुर्विद्यावलेपादुत्क्षिप्तं सूचीनाराचमिव प्रतनुसरलं रोमावलीदण्डमादधाना, तानवमुपजनयतो विधातुरुदरात्करतलैकपालिकया त्रिवारमधिकमुपादानद्रव्यमुत्सारयतो जाताभिस्तटीभिरिव त्रिसृभिर्लावण्यललिताभिर्वली-

भिस्समन्तान्मानसमाक्षिपन्ती, मन्मथरतिभ्यां विधाय मधुपानमधोमुखन्य-
स्तयोरापीनवर्तुलयोः कनकचषकयोर्युग्मेनेव कुचद्वयेन संसारं सफलयन्ती,
सुदृढमुभयतोप्यंसदेशसंक्रान्तस्य शशिविशदकपोलयुगलस्य कान्तिजलतरङ्ग-
सरलि(सङ्ग?)ताभ्यां प्रतिबिम्बच्छटाभ्यामिव भुजलताभ्यां चक्षुराह्लादयन्ती,
शङ्खरेखोपहासनिस्सृतं हासप्रसरमिवातिनिर्मलं हारमाबिभ्रता कण्ठेन शोभ-
माना, मुखामोदमास्वादयता पितामहेन व्यापारितात्पारिजातपल्लवात् विघटि-
तेन प्रलघुपाटलदलेनेव बन्धूकबन्धुना बिम्बाधरेण मान्मथं रागमुत्पादयन्ती,
नेत्राञ्चलोपचर्चितया दुकूलधवलया कपोलयोर्युगिकया मुखश्रियो नेपथ्यमिव
सूत्रयन्ती, मणिकनकसृष्टिना मकरकुण्डलेन कन्दर्पवाहनस्य मकरस्य बन्धन-
शालायमानमभिरामं कर्णयोर्द्वितयमवतंसकुवलयेन कृतोचितच्छायं दधती,
रतेर्विलासमणिदर्पणस्य ललाटफलकस्याधारदण्डकेनेव वरीयसा नासावंशेन
शृङ्गारमुद्दीपयन्ती, भुजगरक्षाधिष्ठितोपकण्ठममृतदीर्घिकाद्वयमिव सुतारसरलं
नेत्रयोर्युगलमालीषु प्रेषयन्ती, सौरूपेण रतेर्द्वितीयेयमिति प्रदत्तेन द्विकेनेवा-
ङ्केन भ्रूलताभोगेन युवतिसृष्टिमुत्कर्षयन्ती, वर्तुलिमचारुणा तिलकेन मध्योप-
रचितमण्डलां यौवनाश्ववारस्य बाह्ली( ला )भुवमिवातिभव्यां भालस्थलीं
बिभ्राणा, भ्रूलतां लिखतः प्रजापतेरङ्गस्पर्शकम्पितात्करतलाद्गलितभाजनस्रस्तेन
मषीदलेनेव प्लावितैरत्यन्तमेचकितकान्तिभिः कुरुलैस्त्रैलोक्यमपि मोहयन्ती,
भालाग्रलम्बिना सीमन्तमणिभूषणावचूलमौक्तिकेन नक्षत्राकारया समुत्तीर्य
गगनादरुन्धत्येव निरूप्यमाणपूर्व(मूर्ध?)सौन्दर्यसंभूतिः, अद्भुताङ्गच्छायास्वरूप-
तया घटितेव सुवर्णसा(रो?)च्चिषां दलैः, उज्वालितेव माणिक्यमणिमयूख-
क्षोदेन, धौतेव मौक्तिकान्तस्सारवारिभिः, पुंसिते(प्रमृष्टे?)व शरदिन्दुचन्द्रिको-
पान्तकेन, दृष्टिपथमुपेता तारापुत्रिकेवाविद्या(ह्लादयि?)त्रीलोचनानां, दर्शनाप-
क्रान्ता स्वप्नाङ्गनेवोन्मादयित्री हृदयस्य, लतेव लोचनालोकनफलस्य, फलपरिण-
तिरिव शृङ्गाररसस्य, रसवृत्तिरिव संमदास्वादस्य, स्वादोपलब्धिरिव संसारसु-
खस्य, श्वासपरिमलानुसारिणा मधुकरस्तम्बेन मुखचन्द्रमस्यङ्कमुपकल्पयन्ती,
सुललितालापप्रकाशितैर्दशनमयूखबिन्दुभिरधः सन्ध्यातपे तारकाण्युद्गमयन्ती,
तिर्यग्विसारिण्या कटाक्षचन्द्रिकया कर्णकुवलयान्धकारमपहस्तयन्ती, पुरःप्रसर्पे-
ता स्मितसिताभ्रशकलेन कुचशैलयोः शिखरमाच्छादयन्ती, गतिवशोल्लासिना
च चलन्मणितुलाकोटिकलकलेन सहंसारवचरणपङ्कजोद्देशमासूत्रन्ती, तस्य सक-
लस्यापि कन्यापरिग्रहस्य स्वामिनी, मनोहराकृतिः कुमारी युवतिराजगाम ।

यस्या द्विःशिखरेण मन्दरनगेनेवोच्चपीनस्तनद्वं-
द्वेनाध्युषिते वपुष्यधिलसल्लावण्यवारान्निधौ ।
उद्भूतं मुखमिन्दुबिम्बमुदभूद्बिम्बाधरः कौस्तुभः
श्वासामोदभरोप्यसावुदभवद्वाक्पारिजातद्रुमः ॥

किं बहुना—

निर्माय यां झगिति दृष्टविशिष्टरूप-
सृष्टेर्विधातुरुदितो हृदि मान्मथाग्निः ।
तेनोग्रतापविधुरः शिशिरं स मन्ये
नाभीसरोजमधितिष्ठति चक्रपाणेः ॥ ३ ॥

झगिति च तामहमुदीक्ष्य चिन्तितवान् अहो कतमं कस्येदमीदृशमेवं स्वरूपरूपातिरेकसुन्दरं युवतीरत्नम् । अथवा यद्यसावीदृशीह पयोधिकुक्षावास्ते तर्ह्यनी( ली?)कमिदं यन्मन्दरगिरिभ्रमादितो विनिर्गता लक्ष्मीः(इति) । निर्गता चेत्तत्कयाचिदन्यया देवष्टकितो वैकुण्ठः । यदि वा नियतमस्मिन्नेकान्तदेशे समागत्य रतिप्रभृतियुवतिरूपातिरेकवर्त्तिना सौन्दर्येण कौतुकाद्घटितेयमन्यैव तरुणी प्रजापतिना । यस्या रूपस्य प्रथमाभ्यासवर्त्तनैर्लक्ष्मीः, उपादानमृद्वाही तुरग उच्चैःश्रवाः, स्तनबिम्बकाधारपिण्ड ऐरावतकुम्भी, श्वासपरिमलोपयोगद्रव्यं पारिजातविटपी, मुखावमार्जनोपान्तकं हिमांशुः, करप्रक्षालनजलममृतं, देहप्रभोद्योतनाश्मकलिका कौस्तुभः, इत्यादिभिश्चैतदङ्गनिर्माणोपकरणवस्तुभिः प्रतारिताः स्वर्गिणो रत्नाकरेण । यदि पुनरसौ ज्ञाता तवेक्त(भवेत्किन्तु ?)खल्वेकेन मन्दरमहीभृता सर्वैरपि कुलाद्रिभिः कृत्वा मथनव्यापारमेषा न तैराकृष्यते प्रसभमित्यादि परामृशत्येव मयि सा तत एवायतनप्राङ्गणाद्दक्षिणया वीथ्या सह तेन कन्याकदम्बकेन पुष्पोच्चयाय पुष्पाराममविशत् । एका च छत्रवाहिनी तासां मध्यादागत्य संवृत्य चातपत्रं प्रविश्यायतनस्य कोणे व्यमुञ्चत् । तत्रोपरि च दिव्यांशुकवेष्टितोऽयं विमुक्तः पटः । झटिति च पटं विमुच्य तथैव त्वरया तरलितमनोवृत्तिरन्यतश्चक्षुरक्षिपन्ती मामपश्यन्त्येव निर्गत्य साऽपि तासां मिलितवती । अथाहमतिकौतुकादुत्तरलमानसो ननु यावदासामसौ पुष्पोच्चयव्यासङ्गेन व्यग्रता तावत्पश्यामि किमेतदंशुकावेष्टितं वस्त्विति गृहीत्वा झटित्युड्डीय सावकाशादेकान्तमिति गतःकोणैकदेशं यावद्वेष्टनकवस्त्रमुत्सारयामि तावदालोकितः पटोऽयं पटं चैनमुद्वेल्ल्य यावदवलोकयामि तावदेकतस्तवेयमनल्परूपावभारपद्धतिरन्यतश्चेयं तस्याः कुसुमकार्मुकायतनप्रशान्तिरतिमनोहरा चित्रमयी मूर्तिरास्ते । अथाहमहो क पुनरस्य संसा-

रसागरसंरणेरियमीदृशी शिल्पविधिविशेषसारा सृष्टिरेषा पुनरत्रैव कन्यकावस्तुनि व्यक्तीभूतेति युवयोरपूर्वाकारसुन्दरिमदर्शनोल्लसितविस्मयरसप्लवेन जडीभूत इव निश्चलावयवकायो विकसितेन चक्षुषा प्रत्यङ्गमुभयतः क्रमेण निरीक्षितुं लग्नः।

अत्रान्तरे च कुतोऽपि गर्भगृहोपकोणदेशाद्धवला भस्मनः प्रलेपेन, कपिला जटाभिः, आपाटला जटानामग्रकोटिभिः, आवरणवल्कलेन च हरितकान्तिरित्यनेकवर्णधरा मूर्त्तिरिव गारुडी तत्कालकलितदारुणभया दुरवलोकप्रकृतिरेका भ्रुकुटिबन्धकारितमुखी प्रकामवृद्धा तपस्विनी कोपेन परमुदर्गलं ज्वलन्ती निर्जगाम। निर्गत्य च सहसैव सा कण्टकघटासङ्घट्टितैरिव, ज्वलत्कणकरम्बितैरिव, शृङ्गिविषनिषिक्तैरिव, रोषशाणोत्तेजनतीक्ष्णैर्वचोभिः आः पाप पुरुषरूप प्रपञ्चितपशुभाव त्रुटितपटुविवेकगुणोद्भ्रष्टचैतन्य धिङ्मानुष्याधम त्वया किमेतदाचरितमपवित्रम्। कैतदपवर्गसंविद्विषयनायकजनयोग्यमासनस्थानमारूढोऽसि। मूढ किमिति देवतार्चनवस्तूपकरणमियं भग्ना। तन्नूनमिदानीं त्वमस्यैव कर्मणः फलमनुभव। प्रथमसमुत्थितेन वचसा प्रोक्तः पशुरेव। किन्त्वन्यत्र समुड्डीय पतनेन पतङ्गजातावनेन च माणिक्यशुक्तिकाभङ्गेन तदाकारया चञ्च्वा शुको भूत्वा क्षपय कालम्। अयं च पटः शिरसि शुकजातिविलक्षणं शिखा भविष्यतीति मां शप्तवती। अहमपि तथा शप्यमानस्तया ननु किं मया कृतमिति यावदधस्तात्पश्यामि तावदास्तृततदीयकृष्णाजिनोपरि स्वचरणेन भग्नां माणिक्यमयीं शुक्तिमपश्यम्। दृष्ट्वा च सानुतापमये चित्रविलोकनाक्षेपपरतन्त्रतया हृदयस्य, यावदसावुपमर्द्य भिद्यते तावदपि न चेतितं मदङ्घ्रितलेन। तदियमेतस्य कर्मणः समुपस्थिता परिणतिः। भवतु स्वीक्रियत एव दैवेन यथा प्रदत्तमेतत्फलम्। यतः।

गात्राणि कांस्यपात्राणि कर्मभिश्छिद्रितान्यसौ।
कांस्यकार इवाजस्रं परिवर्तयते विधिः॥

तन्नमे दुर्विषहशापसन्तापदुस्तरमेतत्। तथाप्यथेदमतिदुरन्तसंवादं दुःखमुपनतम्। यत्किल केयं कस्य सुता कतमकुलप्रसूता क्व वसतिः कुतोऽत्र समागता किमभिधाना त्रिभुवनेष्वनन्यतुल्याकृतिः कुमारी कमेनमपहस्तितानङ्गरूपं पुरुषपुङ्गवमिह हृदीव पटे लिखितमावहतीति न खलु प्रश्नानवसरेण कथञ्चन परिज्ञेया च बभूवेति चिन्तयति मयि प्रायस्तथा शापकलकलमाकर्ण्य झटित्युन्मुक्तपुष्पापचयकर्तव्या त्वरितमेव द्वित्रिसखीसनाथमूर्तिरसौ कन्यका संभ्रान्तेव ततोऽतिनेदीयसः कुसुमवाटिकोदरादाजगाम।

झगित्यागत्य च उपजातवक्त्राम्बुजम्लानिरिह पटे प्रगाढदृष्टिस्तम्भितेव निश्चलाङ्गी क्षणं किञ्चिद्विचिन्त्य सक्रोधमिव तां मयि वितीर्णशापां तपस्विनीमुवाच । हा हा कोऽयमार्ये सकलसत्वानुकम्पनपरस्य भवादृशो जनस्य विमलसमाधिसिन्धुनिर्द्धौतक्रोधमलोपलेपश्चेतसि । आः कृपारसतरङ्गिणि भस्मनस्समालेपेन धवला हिमकालचन्द्रिकेव प्रकामशीतलाऽपि क्लमकरी संवृत्ताऽसि। कराग्रवर्त्तिना रुद्राक्षवलयेन कुण्डलितविषधराध्यासिता चन्दनलतेव आह्लादिदर्शनाऽपि भीषणीभूतासि। कपिलपाटलशिखावतीभिर्जटाभिर्दावदहनार्चिष्मती महीध्रमेखलेव सत्वाश्रयाप्यसेव्यतामागताऽसि । तत्किमेवमाराध्यचरणे! प्रघनकोपानलज्वलितया दृशा तडित्पातमाचरन्ती जलधरेवात्यन्तममृताशयाऽपि लोकमुत्तापयसि । किमितिचाक्रोशकटुरवेण वचसा स्फुरन्मुखरोर्मिकलकला दुग्धाब्धिवेलेव मधुराऽपि व्यथयसे । शान्तेन्द्रियं किन्नाम संसारदूरीकृतं त्वमद्य विस्मृता भगवती, येन शुक्तिभङ्गादागतेन सर्वार्थपरिपन्थिना कोपेन शप्तोऽयमतर्कितोपनतदुश्चेष्टितविपाकस्तपस्वी, तदवधारय किमनेन प्राणिना कृतम् । अनेन निस्सङ्गपथवर्तिनामनुचितं दृषद्वस्तुमात्रमसौ शुक्तिका भग्ना । क्रोधेन तु किमङ्ग कथ्यते या किल हरिहरब्रह्मणामपि दुरापा निश्श्रेयसरसास्पदं क्षमा नाम ज्ञानमयमयूखवती विवेकमणिनिर्मिता तावकी शुक्तिस्तामद्य परमाणुभङ्गेन भूरिशो विमर्द्य जनिता महीयसी हानिः, तद्येन भगवति तवेदमपकृतं तमेव संसारसागरग्राहमरिषड्वर्गविजयिना प्रशमेन शमय कोपम् । एनं तु शुद्धाशयमिदानीमनुगृहाण शापान्तेन । किञ्चान्यदपि याच्यसे यथाऽसौ शुकजातिगतोऽपि विशेषवता मनुजचैतन्येन कालं गमयति तथा करोतु जन्तूनां हितहेतुरार्येति साभ्यर्थनमनया प्रसादिता जातानुतृप्तिरिव सा तपस्विनी वत्से यद्येवं तद्यथाऽयं पटोऽस्य शिरसि शिखात्वेन प्रोन्मेषमेष्यति तथा तदुत्थानपूर्वम (श्रे)षवाङ्मयाव(भि ?)रामनिर्मलं चैतन्यमुत्पत्स्यते यथा च ममासनगतेन भग्नेयमरुणमणिमयी शुक्तिस्तथाऽस्य यदा कस्यापि जगदेकभर्त्तुरास्थानवेदिकागतस्य शुक्तिकायमाना चञ्चूर्भङ्गमायास्यति तदाऽयमात्मप्रकृतिमासादयिष्यतीति शापान्तेन मामनुगृहीतवती ।

अथाहमेतस्मिन्नन्तरे झगित्युपनतया शापाभिधानया नियत्या कवलिते चैतन्यविवस्वति, मीलितेष्विन्द्रियारविन्देषु, सर्वतश्चान्धकारिते जगति, अत्य सद्भावमिवात्मनः प्रतिपद्य निस्सङ्गभावमव्रजम्। अनन्तरं च कोऽहं कुत्राहं कथमहं किं मूर्तिरहं किं वसतिरहं किं प्रचारोऽहं किमभ्यवहारोऽहमिति न किञ्चदव-

बुद्धवानस्मि। इदानीं परमेकहेलयैव लघुस्वरूपमग्रे विलोक्य स एवायमिति सादृश्या(स)पूर्णाभिज्ञानहर्षस्त्वरितमागतः प्रतीहाराद्वगम्य दक्षिणदिगङ्गनाभरणकुण्डलं कुन्तलं देशमध्यासितं प्रतिष्ठाननाम्नो नगरस्य स्वामिनमवन्यामेकनाथमानन्दिनामधेयं भवद्वस्थानशोभनां भुवमनुप्राप्तः। त्रिभुवनैकभूषणमियं च दर्शिता चित्रेण कन्यका। कथितं च यथाऽनुभूतं कुतूहलम्। आलोकितश्च ज्वलत्कन्दर्पहुतवहोत्तप्तसीमन्तिनीमनोविश्रामधारागृहं देवः। प्रमोदाह्लादितं च प्रसन्नदर्शनालापगोष्ठीसुखानुभोगेन सनेत्रश्रवणमन्तःकरणम्। अतश्चाद्य पुरुषधर्मानुबन्धी दिगन्तरानुसरणप्रसङ्गेन युष्मत्सङ्गमान्निवृत्तकृत्योऽयमात्मा। जातश्च ममात्र संसाराम्भोधिपतने भवत्परिचयात्मको रत्नलाभः। प्रत्येतु च मर्त्यलोकमकरध्वजः स्वामी। यस्मादसौ कुमारी यथा चित्रगतेनात्मना सेव्यमानया भवत्प्रतिमूर्त्या सनाथमित्थमेनं पटमावहन्ती भगवन्तमम्बिकादयितमाराधयति तथा नूनमनुरागिणी त्वयि प्रसूनशरसायकशिखाभिः खण्ड्यमानमर्मग्रन्थिरत्यर्थमन्तर्व्यथामनुभवन्ती कापि कालं क्षपयति। एतत्तु पुनरित्थमावेद्यते। यत्खलु कुतश्चिदसम्भाव्यमानदर्शनया तया सौन्दर्यसम्पदा भोः क्षितीन्द्र तादृशी सा, न या निखिलविश्वकल्पनाशिल्पनिपुणेनापि वेधसा स्रष्टुं पार्यते, न या निरस्तलोकत्रयवराङ्गनारूपश्रीभिरपि शचीप्रभृतीभिर्विजेतुं शक्यते, न या त्रिभुवनाधिपत्यार्पणसमर्थेनापि तपसा प्राप्तुमर्हतीत्येवमुक्त्वा व्यरंसीत्।

राजाऽपि अहो! सुमहदेतदाश्चर्यम्, इमं वृत्तान्तमावेद्य कुमारकेसरिणा विस्मायितमाप्यायितं च मे मानसम्। यत्किलात्र संसारमहोदन्वति विष्मकल्मषोल्लोल (विषमकर्मकल्लोल?) लीलाभिरन्तरितं क दृश्यते कुत्र वाऽऽसाद्यते तादृशं कन्यकारत्नम्। अथवा किमत्रालोच्यते निश्चितमचिन्त्यघटनापटीयानेषविधिर्दुर्घटान्यपि घटयत्यतो विधिरेव मे कदाचिदनुकूलवर्ती कुवलयविलोचनां घटयिष्यते तामित्येवमनुचिन्त्य पुरोयायिनं कुमारकेसरिणमनल्पप्रेमोपचारचारुभिर्वचनैरुपरुध्यावस्थितये कृताभ्युपगममादाय निर्गतो मणिमण्डपाद्विसृज्य च पारितोषिकालंकरणदानैर्जनितसन्मानं वसन्तशीलमारुह्य च तुरङ्गमं सह प्रणयिना सामन्तवर्गेण नगरमधिविवेश।

इतश्च कन्याकृते नरपतिरेष मयि न्यस्तभार इति विधिना प्रहिता तां मृगयितुमिव जगाम दिनसूर्ययोर्युगली। ततश्च—

संध्योन्मेषसमृद्धः पश्चिमदिग्वर्तिभूभृतः शिरसि।

मनसि च मन्मथजन्मा मनुजपतेरुद्गतो रागः ॥
अथ भुवनमभूतालोकपातालमूलो-
दर इव निदधानः प्रोदभूदन्धकारः ।
स खलु मलिनसारं धाम यस्योपमातुं-
प्रसरति न कुतोऽपि क्वापि सारस्वतश्रीः ॥

इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
कुमारकेसरिसमागमो नाम सारस्वतश्रीपदाङ्क-
श्चतुर्थ उच्छ्वासकः ॥

---

## पञ्चम उच्छ्वासकः ।

ततः क्रमेण प्रस्तुतसायन्तनारालिकसमयसमाहतामन्दमङ्गलमृदङ्गरवकलकलोद्विग्नो मदच्छटाटोप इव हरित्करिकपोलमण्डलादुच्चलितः पूर्वस्याम्, यामिनीपर्यटनप्रवृत्तानां प्रेतसैन्यानामसितपताकास्तम्ब इव प्रेतपतिपुरान्तरुत्थितस्त्रिशङ्कुतिलकितायां, शीतलावसरं विहाय निःसृतस्य वरुणास्त्रपाशफणिनो विस्फारः फणापञ्जर इव प्रविततः प्रतीच्यां, निवेद्धारि प्रथमपालकोपस्थितानामारक्षकर्तॄणां करतलतुलितासिपत्रप्रभाकलाप इव कुबेरनगरगर्भे संभृतरुचोत्तरस्यां दिशि, समन्तादावृतवियन्मण्डलो गव(र ?)लसम्भार इव द्रवीकरणाद्विस्तृतः प्रवाहेण, यामुनो जलौघ इवोद्वृ(द्ग ?)त्य विलुठितो भरेण, वात्योल्लास इव कज्जलरजसाम्, ईतिपात इव कोकपतत्रिणाम्, असितमुखपटोक्षेप इव दिग्गजानाम्, मृगनाभिपोन्तको (पत्रिको ?) पचार इव भूवेदिकायाः, तमालदलाचार इव गगनमण्डपस्य, मधुकरोत्पात इव ब्रह्माण्डपुण्डरीकस्य, मरकतोद्घाट इव भुवनकोशस्य, कलभकुलतल्पकल्पनाकुलकरिकुटुम्बिनीपाट्यमानाञ्जनगिरीतटीक्षोदसोदरो दिक्पालपुरायतनदेवताधूपवेलोपदह्यमानकालागुरुधूमवल्लरिप्रसार इव नीरन्ध्रमन्धकारो जगदाचचार ।

यत्रालोकविरोधिनि प्रविततध्वान्ते ध्रुवं नेत्रयो-
स्त्रासेन त्वरितं पलाय्य हृदयक्रोडे निलीनं महः ।
तेनात्र स्थलमत्र वारि विटपी वाचाऽत्र पन्था इति
स्वान्तेनैव निरूप्य सर्पति जनो यो यत्र तत्रैव सः ॥

यत्र च—

निभृतचरणन्यासानुवक्रमामपनूपुरा—

मसितवसनां नीलाभैरप्यलङ्करणैर्वृताम् ।
कलयति शनैरागच्छन्तीं मुखानिलसम्मिल-
न्मधुपरणितैः सङ्केतस्थो युवा हृदयप्रियाम् ॥

किं बहुना—

अन्धत्वमाहितं मन्ये तमसा दीपकेष्वपि ।
अतो हस्तधृताः स्त्रीभिः सञ्चार्यन्ते गृहेष्वमी ॥

क्षणेन च पौरन्दरीं दिशमनु तादृशातिमिरनिकरेण नीलीकृते नभसि, हरहासराशिरिव दक्षिण ( दाक्षायणीमुखे, ? ) पाञ्चजन्य इव जनार्दनकरे, निर्मोकपुञ्ज इव कालियफणापञ्जरे, फेनपिण्ड इव यमुनाजले, मृगेन्द्र इव तमालकानने, हंस इव कुवलयवने, बलाक इव नवाम्भोदवृन्दे, झगित्याविर्बभूव तारापतिः ।

ततश्च—

ध्वान्तैकशत्रुरिति निर्भरकोपवह्नि-
संश्लिष्टदृष्टिपतनैरभिसारिकाणाम् ।
चन्द्रः सुवृत्तसितबिम्बनिभेन भस्म-
पुञ्जीकृतः शिरसि पूर्वगिरेर्बभूव ॥

तस्माच्च—

पदं कृत्वा निरालम्बमुपरिष्टादधिष्ठितः ।
पूर्वशैलाक्षरस्येन्दुरनुस्वार इवाबभौ ॥

क्रमेण च—

चान्द्रं महो मण्डलभाजनस्थं
दुग्धं यथा यामवतीमहिष्याः ।
वियोगिनां हृद्दहनोग्रतापै—
रुल्लासितं व्योमतले लुलोठ ॥

क्षणाच्च—

धामभिः सितमयूखसमुत्थैः सान्द्रदुग्धविसरैरिव धौतम् ।
अन्धकारमलकज्जललेपत्यक्तमम्बरमभूदतिशुभ्रम् ॥

अथ—

प्राप्य मण्डलमचण्डरोचिषश्चुम्बकाश्मसदृशं मधुव्रती ।
तीव्रभानुहतकैरवोदरान्नष्टशल्यकलिकेव निर्ययौ ॥

अनन्तरं च—

गन्धः समृद्धो नवकैरवाणां प्रदोषवातैरवकीर्यमाणः ।
नासागतो नस्य इव क्षिणोति मानग्रहं मानवतीजनस्य ॥

इतश्च—

ज्योत्स्नासखः कुसुमकार्मुकपाणिरेष निश्चेतनेष्वपि विकारविभुस्तथाहि ।
स्पृष्टाः करेण शशिना स्रवदम्बुभावैः स्विद्यन्ति शीतकिरणोपलशालभञ्ज्यः ॥

अन्यतश्च—

अम्भःकणास्रशतचर्चितपत्रहस्तसंसक्तपङ्कजमुखी कुमुदोत्सवेषु ।
मुद्रावरुद्धमधुपध्वनितैरिवार्कशोकातुरा सरसि नीरजिनी विरौति ॥

किञ्च—

कमलिनी भुवनान्तरिते रवौ व्यपगतालिकलापशिरोरुहा ।
परिदधे विधवेव सुधाकरद्युतिवितानमिषेण सितांशुकम् ॥

अथ तस्मिन्निरस्ततमसि धवलितनभसि विकासितकुमुदसरसि निहतराजीवयशसि स्रावितशशिकान्तपयसि शून्यीकृतसङ्केतसदसि विधुरितविरहिचेतसि विवर्द्धितानङ्गतेजसि जगदाह्लादनपटीयसि विचरति सौधांशवे महसि, कन्दर्पदाहोपताप्यमानः कृतपूर्वराजकरणीयो राजा ज्योत्स्नामृतोपशालिते सौधशिरसि हृदयसुखोपचारप्रपञ्चितमनन्यसञ्चारमसमीपद्वारपालकसखमभित्तिकं च विलासपटमण्डपमधिष्ठितः, क्षीराम्बुधौ मधुविरोधीव धवलचीनच्छदांशुकभास्वरे महति हंसतूलतल्पे निषण्णः, हरिणलाञ्छनवतश्चन्द्रस्य दर्शनेन तदाकारसादृश्यादनुस्मृतं चित्रं वनिताङ्कितं पटबिम्बमविरतं चेतसि दधानः, तथाश्रुताद्भुतव्यतिकरपरिभावनोद्भूतभूरित्वराविसारितया ननु कथमसौ कन्यका घटिष्यते क उपायः किं क्रियते क्व गम्यते कुत्रान्विष्यते कः समादिश्यत इति चिन्तया समनुदन्तितमनोवृत्तिः,अन्वेषणाय तस्यास्तर्कयन्नवस्थितिं त्रिदिवमन्दिरेषु नगरेषु विद्याधरपुरेषु गुह्यकाश्रयेषु भुजगराजधानीषु च, सर्वतोऽप्यम्बरमुत्पतितुं गिरीनुल्लङ्घयितुमुर्वीमतिक्रमितुमम्बुधिमुत्तरीतुं द्वीपान्तरमनुसर्तुमुरगलोकं प्रवेष्टुमुत्सहमानः, स्पृहयमाणः सर्वगामित्वं पतत्रिणां, सर्वविलोकित्वं जगदेकचक्षुषो विवस्वतः, सर्ववेदित्वं च योगसिद्धानां, मदनरसविमूढो गगनाधिरोहणरज्जुभ्रमेण लसति सितकरकिरणसन्तानेऽप्याललम्बिषुः, अखिलदिङ्मुखाक्रमणवाहनधिया वहति कुमुदवनमारुतेऽप्यारुरुक्षुः, आहिभुवनपथप्रतीत्या च भास्वत्यूर्मिलजलबिम्बितेन्दुप्रतिबिम्बपट्टिकाभोगेऽपि पिपा ( यियां ? ) सुरित्यनेकधा क्लिश्यमानो हृदयेन कियत्समयमवतस्थे ।

तथास्थितस्य हि चिन्तया नभसि निक्षिप्तचक्षुषो राज्ञः सहसैव तावन्तमपि संहृत्य दिगन्तसंभृतं चन्द्रिकाभोगम्, अपाकृत्य च जेतारमपि तमसां चन्द्रमसं, असीमप्रसरः पुनर्निर्वृत्त्येवागतस्तावदारम्भस्तादृशस्तथैव भुवनमाच्छादयन्नुपस्थितो वियति विस्तारवानन्धकारः। तमालोक्य च राजा सञ्जातविस्मयो मनसि भावितवान्, अहो कोऽयं किं जन्माऽयमेवं महाद्भुतविभूतिरकस्मादन्धकारः। किं नाम स खल्वस्तङ्गतो हिमांशुः। परं तिथिरद्य सा। यस्यां प्रथममेव कियद्घटिका च विश्रान्तमनन्तरमखिलाऽपि यामिनी चन्द्रमसा विभाति। कालोप्यहेमन्तवार्षिकतया निर्मलाम्बर एव न च विना पार्वणं दिवसमिन्दुग्रहणतया सर्वग्रासेन तमोऽपि राहवीयमाशङ्क्यते। तत्किमेतत्। किमेष पुनरुद्भूतपक्षतया समुड्डीयान्तरिक्षशिरस्यारूढवानञ्जनाद्रिः, आहोस्विदकालजलधरः कश्चिदुन्नम्य समागतस्स्यात्, इन्द्रजालं वा केनाप्युपदर्शितमित्येवं विमृशति महीश्वरे क्षणादेव स खल्वन्धकारो निजापसारेण समुद्घाटयन्नैन्दवीं विभूतिमेकत्र पुञ्जीभूय गगनान्नगरपरिसरोत्सङ्गवर्तिनि भूतले पपात। तत्पातसमकालमेव तस्मिन्पातयन्निवाश्रूणि, द्रावयन्निव हृदयं, छिन्दन्निव बन्धनानि, दूरोपसर्पणवशादकलिताक्षरव्यक्तिरत्यन्तमार्तः पूत्कारकरुणो ध्वनिरविश्रान्तमुत्तस्थौ। श्रुत्वा च तं शब्दं ऊहनासगर्भमुद्भूतकरुणः क्षोणीश्वरो नन्वसावेकहेलयैव तमोराशिरम्बरमपहाय संवृतेनात्मना कः किल महीमवतीर्णवान्, अत्र च दूरान्तरोत्थानादतारमधुरः कस्यायमाक्रन्दमुखरो ध्वनिः, अथ भवतु यस्य कस्याप्येष पूत्कारः किमनेन, समन्तादार्तपरित्राणं नाम धर्मः सतां विशेषतः क्षितिपालनेष्वधिकारिणां क्षत्रियाणाम्, अतस्तावदविलम्बमेवात्र गत्वा पतितमापदि प्राणिनमाश्वासयामि, प्रसङ्गादस्य च तमसोप्यन्वयमवगमिष्यामीति निश्चित्य उत्थाय शय्यातलात् विधाय च वीरचर्योचितां वेषसंवृत्तिं आकृष्टखड्गः प्रावृतान्धकारपटप्रभावादलक्ष्यमाणोऽङ्गयामिकैरारब्धगमनवेगो मुहूर्तात्तं प्रदेशमाससाद।

झगिति श्मशानवासिन्याश्चण्डिकायाः शून्यायतनस्य नातिदूरवर्तिनो विशालविटपेनाश्वत्थशाखिना सनाथस्य महान्धकूपस्योपकण्ठे तेनान्धकारपटलेन कायकान्तितया व्यक्तिमागतेन मलिनाकृतिम्, अत्यन्तदीर्घतया दीर्घं त्रिविक्रमादपि, प्रकामपृथुतया पृथुं तारकपथादपि, सरलासितमूर्तितया लोहाक्षमिव कालचक्रस्य, घृणावद्रूपतया तलारमिव (?) नरकनगरस्य, रक्तोपवर्द्धिताङ्गतया गर्भपातमिव मारेः, अतिथिमिव भुवनभोजिनः कृतान्तस्य, सहायमिव

कल्पान्तचारिणो भैरवस्य, सेनान्यमिवान्धकरुचिर(कासुर?)संहारिणश्चण्डिकापरिग्रहस्य, पुम्भावमिव कृत्यायाः, पिण्डबन्धमिव भयानकरसस्य, स्पर्शपरिणाममिव विस्रगन्धस्य, यागोपघातिनामन्तश्चरोऽयमिति क्रुद्धेन शतक्रतुना क्षिप्तदम्भोलिदहनसंदीपितमिव पिङ्गोर्ध्वमूर्धजं शिरो बिभ्राणं, ज्वलद्दीपकयुगं चत्वरमिवातिपिङ्गेक्षणद्वितयदारुणं वदनमुज्जृम्भयन्तं, वक्त्रकुहरान्निःसरन्तीभिः पृथुतराभिरनेकशोऽप्यर्चिषां छटाभिर्मुहुरस्रासवतृष्णया रसनाशतानीव कल्पयन्तं, चैतन्यारोपणक्षणे सपदि विदीर्यमाणमुखदर्शनत्रासात्पलायितेन कृष्णकिरणान्धकारवता वामहस्तेन खण्डेन्दुलाञ्छितां कालरात्रिमिव दर्शयन्तम्। इतरेण च पाणिना मलिनभासि मुष्टौ स्थितां यमस्य (भ्रु)कुटिघटनान्धतमसवर्त्तिनीमापाटलकटाक्षलतिकामिव लोहितालेपरक्तां कर्तिकामुदश्चयन्तम्, रिक्तान्त्रकूजिताकर्णनवशेन झगिति निक्षिप्तया दग्विद्युतः पातादिव निपतितेन सहजशालिना जठरावटेन भ्राजमानं, मेखलीकृताहिफणपंजरमणिव्रजादुल्लसन्तीभिः ज्वलद्बहुलजठरानलज्वालाभिरिव मयूखमालाभिर्नाभिकूपान्तर्दीप्यमानं, सर्वतोप्यङ्गेषु पिशितशोणिताभावत (त्त?) या स्वस्मिन्नुद्भूतकबलनाशङ्कैः प्रसादनाय देहतो विनिःसृत्य चरणलग्नैर्निजास्थिफलकशकलैरिव शुक्लातिरूक्षरुचिभिर्नखैः क्षितिपिण्डमापाण्डुरं कुर्वन्तम्, अशेषतोऽपि कीकसमयत्वादेकधातुनिष्पन्नमिव देहमावहन्तं, पितृवनविहारलग्नाभिश्चिताधूमधोरणीभिः कज्जलितामिव निकामश्यामाङ्गद्युतिं दधानम्, इतस्ततः सलव(संच?)लद्भूषणसितोरगमिषादामिषेण भरणमलभमानैर्निर्गत्य रभसा निजान्त्रैरप्यवयवेषु मांसाशया सम्भाव्यमानं, भीषणतया विभीषकाणामपि भयमुत्पादयन्तं, बीभत्सतया नारकिणामपि घृणां जनयन्तम्, उग्रतया कृतान्तमप्यभिभवन्तं, हिंस्रतया मृत्युमप्यतिशयानम्, आवृतं भूषणीकृतानेकनरकरोटिभिः, करङ्केण च सनाथवामकक्षं, मुखीकृतार्द्धललन्मांसपेशिकं, उपवीतीकृतशिरोमालम्, आलम्बितास्थिहारम्, आकारभासुरं राक्षसं ददर्श।

तेन च निधाय यमदण्डभीषणं भुजदण्डमन्धकूपोदरादाकृष्य प्रसभमवरुद्धाम्, अविरतं च सदीनमाक्रन्दन्तीं, सुत्रासतरलतारकेण चक्षुषा निभालयन्तीमभितोऽपि ककुभः, प्रभूतकम्पामापाण्डुरेषु नक्तञ्चराभरणमालाकपालेषु संक्रान्तया प्रतिमूर्त्या तस्यैव शरणमिव प्रविष्टां, जटोरगरक्षितां यौवननिधानका(कल?)शीमिवान्धकूपगतोदरादुत्क्रान्तां, कमलभ्रमादागतं चञ्चरीकचक्रमिव कराग्रमिलितं रुद्राक्षमादधानाम्, आवारकेण लावण्यसलिलशैवलेनेव लतावल्कलेन शोभमानां, तारुण्येन निस्तुषीक्रियमाणस्य कान्ति-

कलापस्योपरि परिस्फुरन्त्या तुषच्छटयेव योगपट्टयाकृतोत्तरासङ्गां, प्रकाशितरूपमादर्शबिम्बमिव भस्मनोद्वर्तितं गात्रमुद्वहन्तीं, चतुरङ्गप्रमाणमासूत्रयतो विधेरङ्गस्पर्शकम्पिताङ्गिच्युतेन कराद्गुणत्रयशालिना विकर्णमानसूत्रेणेव यज्ञोपवीतेन विराजमानां, पृथुनेत्रकृष्णाजिनरुचा कुचकमण्डलुवाहिन्या त्रिवलिमेखलाबन्धभृता धृतव्रतलिङ्गयेव गात्रश्रिया परिगतां, माहेश्वरीं मूर्त्तिमिव शशिखण्डमण्डितां ललाटेन, वैष्णवीं हृदयभूमिमिव कौस्तुभविभूषितामधरेण, पैतामहीमासनस्थितिमिव सरोजमयीं धवलाक्षिविक्षेपेण, वृक्षशिखाशायिभिरार्तरवप्रबोधादुत्कूजद्भिराक्रन्द्यमानामिव पतत्रिभिः, अनिलान्दोलितशिरसा निवार्यमाणकौणपामिव पिप्पलमहीरुहेण, प्रसारितकरेणाकृष्यमाणामिव सुधाकरेण, कृतालिङ्गनेनापसार्यमाणामिव निशीथमारुतेन, प्रशान्ताकारसुन्दरां चतुर्दशवर्षवयसमेकां कन्यातपस्विनीमपश्यत्। दृष्ट्वा च झटिति मा मा भैरिति गृहीतकरुणारसैर्वचोभिरासन्नमरणभयोद्भूतशोभामाश्वासयंस्तपस्विनीमहो भद्रमसृग्भुजा हतकेनास्पृश्यमानायामेवाहमस्यां त्वरितमिह प्राप्त इति प्रतोषोल्लसितमानसः सहेलहक्कारवं विमुञ्च विमुञ्चापसर्प रे दुरात्मन् न खलु भाजनमसीदृशानामाहारोपकरणवस्तूनाम्।

तथाहि—

> एनां तव प्रकुथदामिषखण्डसाध्ये
> भोज्ये यदीत्थमुपयोगवतीं व्यधास्यत्।
> वेधास्तदत्र खलु रूपविशेषशिल्प-
> सङ्क्लेशमीदृशमसौ बत नाकरिष्यत्॥

तदहो विस्तारिणि पितृवनेऽत्र कुत्रापि निपुणमन्विष्य कालापहृतजीवितासु जन्तुकुटीषु शटितपिशितपिण्डकैः कुरु दुष्पूरणमात्मनो जठरगर्त्तकस्येति तं नक्तञ्चरमवोचत्॥

सोऽपि झगित्यालोक्य राजानम्, अपि नाम सुरसिद्धविद्याधरोरगमनुजगुह्यकानामन्यतमः, क एष युवा, मया हि किल सर्व एव त्रिभुवनोदरविचरसञ्चारिणो वीक्षिताः पुमांसः, पुरुषपुङ्गवस्यास्य तु किमप्यपूर्वमेवाङ्गेषु लावण्यम्, अन्य एव कलापः कान्तेः, अपरैव हि रेखा सौन्दर्यस्य च, आरभटिस्तु किमापृच्छ्यते योऽयमत्यन्तभासुराकारदुर्निरीक्षाणां रक्षसामपि भयङ्करस्य ममाग्रे निर्विशङ्कमुत्खातखड्गयष्टिरेवमात्मानं दर्शयति, तन्न सामान्यो भटमात्रमसावद्भुतः कश्चित्। अथवा किमिष्टार्थपरिपन्थिनमपहस्तनीयं प्रतिभटमुप-

श्लोकनविकल्पेनालोकयन्नेव तिष्ठामि। निर्लोचयामि झटिति चैनमित्येवं विचिन्त्य कृतान्तसद्मनो मुखस्य द्वारि बद्धास्थितोरणस्रजमिव विसृत्वराकारशिखरां विकासयन् दशनसंहतिं, तथैव च विशालधवलया प्रलयजलधरबलाकाच्छन्नमिव भुवनमापादयन्, अखिलदिग्गजकुलावत्रासकेन ध्वनिना सोल्लुण्ठहासं जहास। हेलया चाब्रवीदहो को भवान् किमेवमस्याःकृते त्रिदशैरप्यनभिगम्यविक्रमं वि(नि)ग्रहीतुमागतोऽसि मां। को हि कल्पान्तविस्तृताम्बोधिजलमहाप्लवेन प्लाव्यमानां प्रस्खलितुमिह क्षमः क्षोणीं, को नाम बलवान्मया निगृह्यमाणामिमां विमोचयितुमीश्वरस्तापसीम्। किञ्च किं मे त्वया द्विभुजेन जन्तुना क्रियते। योऽहमयोध्यश्चतुर्भुजस्य विष्णोरपि, दशभुजस्य हरस्यापि, द्वादशभुजस्य स्वामिनोऽपि, अन्येषां तु गणनैव कियती तदेतदिष्टोपदेशानुग्रहेणोच्यसे, कल्याणप्रकृतिरसि, किमित्येवमशक्यसङ्गरसमारम्भादात्मानमनर्थसङ्कटे पातयसि, किमिति तारुण्यतरलितो गगनमुत्पतसि, किमिति दर्पान्धः कृतान्तमुखकूपे निपतसि, किमिति वीरव्रतसंयमी मृत्युमाराधयसि, किमिति शौर्यग्रहाविष्टो ज्वलत्यग्नावात्मानं क्षिपसि, किमिति रणरसास्वादप्रवृत्तो विषतरुफलानि खादसि, किमिति सुभटचर्याकुतूहलैकदुर्ललितो दारुणेन फणिना क्रीडसि, किमिति विभुजबलावष्टम्भविनटितो दिग्गजेन कराकृष्टिकेलिं करोषि, किमिति चापन्नपरिरक्षणप्रवणो रणेन विश्वैकवीरं मामुपक्रामसि, व्रज विमुञ्च दुःशिक्षितदुरन्तमिममध्यवसायमायोधनस्य न खलु विमुखेषु रक्षसां प्रवरः प्रहरतीति प्रोक्ते पलभुजा भूभुजामधीशः प्रत्युवाच।

रे रे दुर्जीव किमेवममुना प्रश्नादिनिरर्थकालापकोलाहलेन जनयस्यन्तरायमुपस्थिताहवमहोत्सवस्य। स्वप्रशंसापरो हि यस्त्वं किल बहुभुजानामपि पुंसामयोध्यमावेदयन्नात्मानं द्विभुजनिन्दापरायणो मामवज्ञया जुषे तत्र सा तवैव पिशाचिकोदरकोशकीटकस्य गरीयसी। नरेषु बहुबाहुता नाममात्य( न माहात्म्य ? )स्य। किन्तु न ज्ञातवानसि यत्खलु स्वामी निशाचरचक्रस्य रावणो विंशत्याऽपि भुजानां द्विभुजेन क्षुरनिशितधाराग्रदलितगलकन्दलोच्चलन्मौलिपातमुपसंहृतो रामेण, भार्गवेण च भुजसहस्रविस्तृतः कार्तवीर्यः, तदवधारय भटानां भुजद्वयमेवोपयुज्यते संयुगेषु॥

तथाहि—

उदञ्चच्चित्तानां त्रिभुवनजये दक्षिणभुजः
कृतारम्भो वामः पुनरभयदानाय चकिते।

क ( कु ? )पुंसां तावेव ध्रुवमुदरपूर्त्तिव्यवसिता-
बभूदेकश्चान्यो मलनिगमभूमेः शुचयिता ॥

हरिहरस्वामिनामसाध्योऽहमिति च त्रैलोक्यवन्द्येषु निन्दामातन्वती त्रुटितैव किन्नते जिह्वा । त्रुटिता न चेदहमिदानीं लुनामि । अपिच रे पाप प्रतिपदमुदञ्चितालापैः किमिह विस्तारितेन प्राकृतजनोचितेन कलिना । यस्मान्मिथो मर्माविष्कारमेदुरो रण्डाकलिः, आक्रोशमुखराङ्गुलीस्फोटनप्रधानः सपत्नीकलिः, असभ्यशपथिकोत्थापनपटीयान्कुट्टनीकलिः, स्वहननोपक्रमप्रवणो ब्राह्मणकलिः, शाखोच्चारपरः प्रहारवन्ध्यो वाणिज्यककलिः, कुटुम्बमेलिकलकलोदर्गलश्चान्त्यजकलिः, अन्यश्च कश्चिदन्योन्याचरणनिन्दापरायणः, कोऽपि परस्परकृतोपकारप्रकाशनपरः, कोऽपि गर्जितरवमात्रसारः, कोऽपि चात्मप्रशंसापुरस्सरः कलिः, इत्याद्यनेकधाऽपमानकविषयो विधेयविफलः पर्यन्तनीरसश्च समन्ताज्जानपदः कलिः । सुभटकलिस्त्वन्यादृश एव । यत्र प्रहारमिलितासिधाराखणत्काररव एव सङ्करालापः, प्रबलकुन्ताग्रताडितोद्यतरकुञ्जरारटितमेव महीयसी हक्का, परशुमुखविखण्डितारिशिरःसुषिरपरिणतपवनोरुभाङ्कार एव निर्झरागर्जिः, स्वभुजसंहृताराातिकुलपुरन्ध्रिकानुशोचनपदान्येव परेषु निन्दा, विमुखीकृतकातराभयप्रदानमेव चात्मनि प्रशंसा चारलोकस्य, तदद्य रे समरमूढ तेनैव कलिनाऽनुष्ठीयसे । प्रहर प्रहर पूर्वम् । नाहमग्रप्रहारी रणेषु । येन ते झगित्यसिलतोल्लासलीलयैव विभूय कपिलकुन्तलसटाप्रभोद्दीप्रहरशरानलकरालितं खण्डमिव त्रिपुरस्य पातयामि धरातले शिरः, तारयामि च विपक्षनिग्रहेण तापसीम्, इत्येवमुर्वीभुजो निशम्य शौर्यमदोद्रेकदारुणं रणालापम्, आनंदितः प्रवीरलाभेन, विस्मितः प्रतिभटावलेपोक्तिभिः, तरलितो राजभुजबलोपलम्भकौतुकेन, त्वरितः समरसङ्गमाभिलाषेण, कुपितश्च प्रस्तुतार्थ( वि )घटनात्, राक्षसः—" साधुभोः शौंडीर ! साधु, योऽहं प्रकृष्टरणपथोपदेशाक्षरैरेवमनुशिक्षितोऽस्मि तदेष पूज्यसे कुशिक्षितगुरोस्समरशिक्षादक्षिणया राक्षसेन तव । भवाभिमुख्येन । प्रगुणो गृहाण मद्भुजपरिघप्रहारात्पौरुषस्य फलमित्यालापसमकालमुत्पाद्य पिप्पलस्य पुरोदृष्टमसङ्कटायामं ताल( द्रु )ममुदग्रेण रंहसा नभसि भ्रामयित्वा क्षिप्तवान् । क्षितीन्द्रोऽपि तमापतन्तमन्तरिक्षेण सौष्टवागमनसङ्गृहीतैर्वायुभिः फूत्कारभरमुत्सृजन्तं पृथुदलेन शाखाकदम्बकेन विपुलफणाचक्रवालभीषणं भुजङ्गमिव सरलप्रकाण्डमवनीरुहं सर्पारिचञ्चुसन्दंशदारुणेनासिना विखज्य खण्डशः पातयामास ।

क्रोधेन यातुधानः पुनरन्यमन्यादृशा प्रहारोपक्रमेण शाखिनं व्यमुञ्चत् । अव-हितश्च राजा तमपि तेनैव पथा निर्वर्तितवान् । अन्यमन्यं च यं यमुर्वीरुहमति-क्रोधदुर्धरो निशाचरः क्षिपति तं तं नभस्युद्दण्डताण्डवनटेश्वरो नरेन्द्रश्छित्त्वा-ऽवनौ प्रकीर्णमेव दर्शयति । एवमन्यदप्यनेकोद्दण्डगण्डोपलशिलादि यद्यथा समर्थमङ्गीकरोति नक्तञ्चरस्तत्तथैव प्रपञ्चितोचिताघातभङ्गेन विघटयत्युर्वीभुजां प्रवरः ।

ततश्च क्षितीन्द्रकरतललितासिपत्रप्रभावपरिभूयमानेषु विषमपातिष्वने-कशोऽप्यस्त्रेषु बाढमुद्दीपितः प्रबलबहुलकोपानलेन कौणपः कुतोऽप्याकृष्य करे कृतमुत्क्षिप्तवानेकमपूर्वं, विश्वसंहारविदलितस्य ब्रह्माण्डसम्पुटस्य कर्परमिवो-त्पातचलितचण्डानिलेन बलादुल्लालितं, क्षितिपीठमिवादिकोलेन दंष्ट्रया विधूतं, कल्पान्तविघटितं कमठेन्द्रकटाहमिव स्फुटनवेगादूर्ध्वमुच्चलितं, देवतावतारि-तमिव अद्भुतादभ्रविस्तरं शिलापिण्डम् । उपरि चान्दोलयन्मस्तकस्य स दर्पो-द्रेकदुस्सहमवादीत् ॥

कालस्यासनपीठिकाऽतिमहती भित्तिश्च मारीगृहे
मृत्योरप्यभिषेकमङ्गलविधावायामिनी वेदिका ।
मद्बाहुप्रहिताऽद्य वीर शृणु भोस्त्वां संहरन्ती शिला
योऽन्यः कश्चिदिहामरेष्वपि भटस्तेनाप्यसौ रुध्यताम् ॥

इत्येवमभिधाय ( प्रहर्तुं प्रवृत्ते राक्षसे ) नरपतिविनाशशङ्कया हा हा गृहीतमप्रतिसमाधेयं पापेन रक्षसा प्रहरणमिति साकूतमाकुलीभवति तप-स्विन्याश्चेतसि, अहह दुष्करमितो विमोक्षणमवनीश्वरस्येति विषीदत्सु खेचरज-नेषु,अहो निर्नाथमिदं जगज्जायते लग्नमिति च समन्तादुत्ताम्यति दिगीशवर्गे, न किल यावदसावाक्षिप्य क्षिपति तावदेकहेलयैव कलहकौशलविशारदो मेदिनीपतिरपहाय खड्गमादाय च विचित्राघातघटनैकचण्डं गण्डोपलमतिरय-विसर्जितेन संवारिताखिलभुजस्था ( स्थे ? )ञ्ना तेन झगित्याजघान कराग्रम-णिबन्धे पलाशिनम् । तस्य च गण्डोपलास्फालदलितमणिबन्धविधुरात्परि-भ्रश्य हस्ताच्छिला भूतले पपात । सा तादृगारम्भसंरम्भिणी महाशिला विवेश च निजाङ्गभर(दा)रितधरातला पातालम्, उत्थितश्च नरेन्द्रसम्बन्धिना साधुवादेन मिश्रितः समरमुत्पश्यतां नभसि नभश्चराणां कलकलः । अत्रान्तरे निष्फलीभूतबलवदखिलास्त्रपातप्रयासतया विलक्षो रक्षसां वरः सहसैव क्वचि-ददृश्यभावमापद्य प्रयातवान् । उर्वीश्वरस्तु विस्मितेन व्यचिन्तयत् । ननु कि-

मित्यसावसमानपौरुषः पिशिताशिष्वेवमकृतसमरसमाप्तिरन्तराल एव गतवान्, किं सङ्गरे नरेणाधरीभूतस्त्रपया तिरोभूतवान्, उतापरोपायकामस्वधामन्यगात्, अथच्छलेन मां वञ्चयितुं प्राविशन्नभसि, यदि वा ममाशयपरीक्षार्थमेवं स्थितवान्, उतस्विदियमीदृग्विधैव प्रक्रिया रक्षसां रणेषु, किं पुनः रनेनैव पथा पलायितवान्, आहोस्विदसावेवं समरोपसंहृतिक्रमः, तत्किमेनामग्रे विधाय तपस्विनीं यामि, प्रतिपालयामि वा मुहूर्तम्, अथवा छिद्रप्रहारिणी हि रक्षसां जातिः, अतः कियत्क्षणमुदीक्ष्यत एव पन्थाः पापस्य तस्येति विकल्पमातन्वति वसुन्धरास्वामिनि, अकस्मात्तस्मादगाधरन्ध्रोदरादन्धकूपतः पातालजान्हवीप्रवाहपङ्कुरवोद्गार इवोज्जगाम हुङ्कारजन्मा महाध्वनिः । ततस्तस्यानुपथानुबन्धिना धूमपटलेन वर्षन्नतिचपलफालविस्फारिभिः स्फुलिङ्गैः फुल्लचुल्लोलवल्गिनीभिर्ज्वालाभिः स खलु सामीरणेन रंहसा निर्जगाम दुर्निरीक्ष्यो राक्षसः, स्थितश्चाग्रे ।

तस्य च विसङ्कटाकारविस्तृतहुताशनाभोगस्य सुदूरमनुसर्पिणा(ज्वा)लाकदम्बकेन ज्वलतीव मेदिनी, ज्वलन्तीव ककुभः, ज्वलतीवाम्बरं, विश्वमपि प्रलयकालानलकलापोद्दीप्यमानमिव दुस्सहावलोकमापन्नम् । अथ तथाकृतोपस्थितिरसावग्निमयाकृतिरग्निमयालोकपद्धतिरग्निमयालापवृत्तिरग्निमयास्त्रसंभृतिरग्निमयाशेषव्यावृत्तिश्च दुरक्षरेण वचसा क्षितिपालमब्रवीत् ।

नैषा हन्त शिला न तालविटपाद्यस्त्रेषु चास्त्रं किम-
प्येतद्यत्र विपञ्चयिष्यसि बलं बाहोरसेः कौशलम् ।
आन्तर्बहिरसावनेन बलवज्ज्वालावलीढस्य ते
नान्योऽस्मत्करुणारसश्रुतिभरादास्ते परित्राविधिः ॥

तदयमालिह्यसे ललत्कालजिह्वाविलोलकोटिभिर्ज्वालाभिरभिहितोऽसि भो रक्ष रक्षात्मानमस्ति रे शक्तिरित्येवमुक्तो महीपतिः कृत्वा स्मितं प्रत्युवाच । रे क्रव्यादकीटक साधु साधु अवधानेन सज्जीकृतोऽस्मि, क्व नाम छलप्रहारिणामन्वयोत्पन्नेन भवता शिक्षितेयमेवं प्रवीरपुरुषोचिता सङ्ग्रामरीतिः । किन्तु रे मूढ पारुष्यविषमाभिघातदारुणे प्रहरणं नाम सुदूरमास्तां, यः किल सुखस्पर्शेन पयसाऽपि सिक्तः प्रलीयते तस्य हुतभुजोऽवष्टम्भेन यदित्थमाजौ प्रगल्भसे तेनाविमृश्य विचरन्निश्चितोऽसि पिशाचजन्मा पशुः, पशवो हि वध्याः समराध्वरेषु । अतोऽद्य मया वधेन सम्भाव्यसे । शृणु यथा सम्भाव्यसे ।

सर्वत्राङ्गेषु वल्गद्घनगहनशिखाचक्रचण्डाग्रकोटि-

उच्चैरुच्चत्पिङ्गस्फुलिङ्गोड्डमरपरिकरेणामुनैवाग्निना ते ।
पङ्कं निर्वाप्य देहामिषमसिलतिकालूनमापीनखण्डं
तुण्डे कालस्य भास्वत्कुहरिणि शिशिरग्रासगृह्यं क्षिपामि ॥

अथवा—

वह्नेस्तवास्य मम भीमभुजप्रताप-
वज्रानलेन पिहितस्य कुतोऽवकाशः ।
उत्कं कुरु व्रज गृहं मिल बान्धवेषु
बुध्यस्व रे विसृज किं रणडम्बरेण ॥

अथेत्थमपि नास्माकमुक्तं करोषि तदिदमनुभूयतामसमसाध्यावगुण्ठितस्य फलमात्मनः स्वभावस्येति गर्वगरिमोद्गारगर्भया गिरा तं कैकसेयमास्कन्द्य ननु शीतलेन तीव्रः प्रशाम्यत्यम्भसा निर्वाप्यते वह्निरतोऽग्निमादौ नियम्य पश्चादमुं खड्गेन राक्षसापशदमपहस्तयामि, तत्खलु विना पानीयमार्द्रतरुपल्लवेनापि प्रहतोऽयमग्निः प्रलीयते तत्तथा करोमीति निश्चित्य वामेन धृत्वा कृपाणमितरेण च पाणिना नेदीयसो विनम्रशाखस्य शाखिनः पृथुदलातिमांसलं पल्लवमादाय रे रे हिंस्राधम म्रियतां म्रियतामेष विधाप्यसे पल्लवाहतिभिरित्यमन्दमाभाषमाणः प्रगुणिताघातवल्गुना संस्थानेन स्थिरीभूय धावितवान् ।

अनन्तरमगेन्द्रकुलपक्षतिप्रलयभीषणारम्भदम्भोलिदहनदुर्वारडम्बरमासूत्रितं रक्षसाऽऽशुशुक्षणिप्रकरमकिञ्चिदिव नियमयितुमङ्गीकृतेन विटपिनः प्रवालेन हेलोपक्रमं पराक्रममुदीक्ष्य मानवेन्द्रस्य, सहसैव परमहो मनसि निर्व्याजं वीर्यम्, अहो भुजशौर्यम्, अहो वचस्यकृत्रिमालापपरिकरप्रौढिः, अहो समित्यभिमुख्यम् अहो प्रहारकर्मण्युचिताक्रव्यापारनैपुण्यम्, अहो प्रबलेऽपि वैरिण्येवमवज्ञाविस्फूर्जितं भूभर्तुरस्येत्यद्भुतरसावेशाद्विधूतमस्तकेषु रणप्रेक्षाकुतूहलिषु देवेष्वेकादशानामपि रुद्राणां जटाजूटतरुत्रुटितजाह्नवीप्रवाहजन्मा युगपदम्बरतलात्पपात परितः प्रकीर्णविकटच्छटाकटकसम्पातदुर्द्धरो वारिसन्दोहः । तेन रुद्रैकादशिकोत्तमाङ्गगङ्गाम्भसां भरेण झगित्येव सा तस्य तावतोऽनुबन्धादसाध्याऽपि विध्वस्ता शवाशिनो वैश्वानरी सृष्टिः । विध्वस्तवह्निशिखाङ्कुतश्चासौ तथैव त्वरया विशेषभीषणाकारमेकं शिरसि शिखादण्डमिव मृत्योः, द्वितीयं कुलिशमिव सुरेन्द्रस्य, तृतीयं शृङ्गमिव कालमहिषस्य, चतुर्थं कोणमिव त्रिशूलस्य, पञ्चमं विषाणमिवाभ्रकुञ्जरस्य, वार्द्धकावगलितं चण्डिकादन्तमिवास्त्रतामापन्नं, दनुजदारुणाघातविघटितं नृसिंहनखरमिव मुष्टौ निवेशितं,

कलिन्दसुताकुक्षिपाटितोर्वीतटत्रुटितं सङ्कर्षणहलाग्रमिव वस्त्वन्तरेण स्थितमपारपरुषताप्रचण्डमादाय मण्डलाग्रमसमखण्डनभराडम्बरप्रबलः प्रतिभटपलायनाशङ्कयेव सुदूरमसिलतोल्लासनविसारिणा बाहुपाशेन रुन्धन्नाशामुखानि, उपरि परिसर्पता कृपाणदण्डेनार्गलयन्विहायसो द्वारम्, उदारदीपकालोकदीप्रया दृशा कुर्वन्सर्वतोऽप्युद्योतम्, उत्तालतुमुलेन किलकिलारावशिबिरेण विश्वगतं च लोकमुन्निद्रयन्, उदग्रपदपातदलितमेदिनीपृष्ठः प्रधावितो राक्षसः क्रोधानुबन्धातिदुर्द्धरं प्रहर्तुम्। अथासौ सहसैव परं प्रहारव्यापारितो राक्षसेन खड्गस्तदुग्रकरमुष्टिबन्धाद्विघट्य राज्ञः प्रदक्षिणां कृत्वा पुरश्चरणयोः पपात। राक्षसोऽप्यत्रान्तरे संवृत्य सपदि सङ्ग्रामदारुणं स्वरूपम्, उपरचितकरसम्पुटाञ्जलिरागत्य विनयादाजानुविनमितेन मूर्ध्ना प्रणाममकरोत्। अब्रवीच्च सप्रश्रयम्—अहो! सत्यममुतः स्वरूपादवगतोऽसि यः किल जीव इव संसारशरीरस्य गीयसे, मुक्तामणिरिव ब्रह्माण्डशुक्तिसम्पुटस्य पठ्यसे, मृगनाभिनायक इव नरलोकव्यञ्जनये(नाय ?)निर्वर्ण्यसे, रत्नगुच्छ इव भूकल्पलतिकायाः श्रूयसे, माणिक्यबन्ध इव जम्बूद्वीपपदकस्य प्रतीयसे, स खलु सकलभुवनभूपालभूषणापीडचूडाग्ररत्नं प्रतिष्ठाननगरपरमेश्वरः कुन्तलानामधीश्वरो राजा मलयवाहनो भवान्। यस्य ते नामाक्षरस्तम्बः सदैवालापमालाग्रिमगुलुच्छ इव गृह्यमाणस्त्रिभुवनश्रिया सततमखिलब्रह्माण्डमण्डलोदरविहारलीलाविशृङ्खलेन मया समन्तादयमेव सुभटगोष्ठीष्वयमेव शृङ्गारवार्त्तास्वयमेव कवीश्वरसभास्वयमेवाग्रगणनासु त्यागिनामयमेव नामग्रहेषु विदुषामयमेव प्रशंसासु क्षत्रियाणामाकर्णितो बाढम्। कस्यापरस्यान्धकभिदा देवेन वर्णितपराक्रमं मामभिभवितुमीश्वरा शक्तिः, कस्य वाऽन्यस्य प्रभावमपहाय पपात पुरश्चरणयोरेवमसौ त्रैलोक्यविजयी मण्डलाग्रः, तदेष स्वयमुपढौकितात्मा स्वीक्रियतां कृपाणः, मुक्ता च तापसीयम्, इदानीमनुज्ञया प्रसीद, व्रजामि निजमाश्रमस्थानम्, सिद्धश्च तवाहममुना विक्रमरसेन, कदाचिदवसरे यन्मयाऽपि कार्यमुपयुञ्जीत तत्राहमनुस्मरणीयः श्रीमतां वरेणेति सानुनयमभिधाय तूष्णीं गते तस्मिन्नुपजातकौतुको नरपतिरवादीत्—भोः! समरसन्निवेशोद्वेदिता भद्रैव जायते मैत्री। तेनाद्य मे रमा(णा?)नुभावाज्जातोऽसि निशाचरधौरेय मित्रम्। अतो न नाम रक्षणीयं मनः स्तोकमापृच्छ्यसे कथय को भवानवद्यममुना स्वरूपसंरम्भेण न खलु पलाहारपौरुषं रक्षोमात्रमतिमात्रगुणोऽसि राक्षसेषु कश्चित्, कश्च क्व वाऽयमासादितः प्रभावी मण्डलाग्रः,

किमिति चेत्थमतुच्छमनसाऽपि भवता कृपास्पदमारब्धेयं तपस्विनीत्यादि पृष्टो नृपेण सोऽब्रवीत्

कथयामि श्रूयतामुर्वी(पते!) प्रसिद्धैव भवतामस्तीह तोयधेर्दक्षिणस्य परं कूलमलङ्कृत्य स्थिता सर्वतोऽप्युद्दीप्रकनकमयाशेषसृष्टितया बहिर्निर्गतस्यास्थानपदवीव वाडवस्य, वज्रिहतपक्षस्य वज्रदहनविश्रान्तिरिव त्रिकूटशैलस्य, हरशरहुताशदीप्तस्य प्रच्युतिरिव त्रिपुरस्य, कनकसञ्चयपरस्य कोशाद्रिरिव दक्षिणदिगीश्वरस्य, प्रलयपवनास्फालनत्रुटिता हेमाद्रिशिरःश्रेणिरिव विदीर्य शतशः प्रकीर्णा भूतले, भूय(रिव?) सौवर्णी त्रिभुवनश्रियः श्रियोऽनुकारादुत्पादितेन्द्रपुरीशङ्का लङ्का नाम नगरी। यस्यामद्यापि दशकण्ठशासनकदर्थनानुस्मरणत्रासात्समीरणः प्रचलदायतपताकाग्रतरलिमाकारेण सदैव कम्पमानः प्रविशति। यस्यां च रावणेन बलादानीय निभृतानां त्रिदशबन्दीनामनवरतमनर्गलाश्रुपातमलिनितानीव कालिमानमावहन्ति मरकतोपलफलकनिर्माणवन्ति हर्म्येषु मणिकुट्टिमतलानि। या खल्वहो विना दशाननमिदानीं कोमलातपकारितामुत्सृज्य स्वातन्त्र्येण प्रवृत्तोऽयमिति पतिपराभवमसहमाना तपति तीव्रमादित्ये सूर्यमणिभूमिकाऽऽविर्भूयमानार्चिश्छलेन कोपादिव ज्वलति। या च दशकन्धरे स्वामिन्युपरते विलासवापीषु पीडयति कमलषण्डमचण्डधामाऽसावित्युदये चन्द्रमसः स्यन्दमानेन्दुमणिगवाक्षवलभीजलबिन्दुराजिभिरजस्रमेव शोकादिव रोदिति। तस्यां च रक्षसामधीश्वरः पुलस्तेरपत्यम्, अन्वयाभरणमम्भोजभुवो भगवतः, श्रीमतश्च विष्णोश्चरणनखचन्द्रिकाऽऽचान्तललाटतटकालिमान्धकारधोरणिः, अनन्तरं रावणस्य प्रतिष्ठितो राघवेणात्मनः प्रताप इवास्ति राजा विभीषण इति। असावपि ख्यात एव भुवनेषु।

धाम्ना तीव्रगुणाञ्चितेन जगतामत्यन्तमुत्तापके
प्राप्ते कालवशान्निशाचरपतौ लोकान्तरं रावणे।
तेजस्वी शिशिराशयः शुचिसुधानिष्यन्दहृद्याकृतिर्यः
सूर्येऽस्तमिते शशीव समभूदाप्यायको देहिनाम्॥

अपि च—

योऽभून्निसर्गमलिने रौद्रे जातोऽपि रक्षसां गोले।
विमलाकृतिरतिसेव्यो मणिरिव फणिनां फणाफलके॥

तस्याहं मातुलसूनुरनल्पेन च गृहीतः प्रेम्णा रावणक्रोधनिःसृतस्यापत्यसहायः सहानुवर्त्ती हृदयस्य मायाबलो नाम। एकदाऽस्मत्स्वामी विभीषणः सह प्रणयिना लोकेन सुकेलिललितया सन्तिष्ठमानो गोष्ठ्या झटित्याकृतसत्वरमागत्य विज्ञप्तः प्रतीहारेण—देव कङ्कालको नाम कौणपः कुतोऽपि वेगादागतो देवेन सह दर्शनं निर्विलम्बमर्थयत इत्येवं निशम्य स्वामिना शीघ्रं प्रवेशयेत्यादिष्टो द्वारपालस्तथा कृतवान्। असावपि प्रविश्य कृतप्रणामो राक्षसः स्वामिन्नेकान्तसमाख्येयं कार्यमित्युक्तवान्। तथाऽस्मद्द्वितीय एव स्थिते राक्षसपतौ स खलु सङ्क्षेपतः कङ्कालको वक्तुमुपाक्रमत—देव! तदा देवेन प्रेष्यमाणेषु प्रतिदिशमवनितलचारिषु चरेष्वहमप्युत्तरां दिशमुररीकृत्य निर्यातवानितः। तथा निर्गत्य चोल्लङ्घ्य लहरीविसारिशीकरनिकरान्धकारितदिवं महानदीं नर्मदामधिविष्टः प्रकृष्टं पत्तनेषु पल्लवितधवलध्वजाटोपं लडहलाटीकटाक्षैः, अलङ्कृतजनालापमालापभङ्गिभिर्विलासिनाम्, आश्रयं श्रीमतां भृगुगच्छं नाम नगरम्। तत्र चासीमरम्यतया निरुद्धहृदयोऽहं कियतोऽपि वासरानतिक्रम्य क्रमेणोत्तरापथवर्तिष्वशेषदेशान्तःपातिष्वनेकशोऽपि ग्रामपुरपत्तनाधिष्ठानेषु विचरन्कंसारिशैशवदशास्पदमागतो मथुरेति नाम्ना नगरीम्। तस्यां सहसैव परमागतेन मया भ्रातृयोगाद्विघटित इव मारुतिः, पुरुषरूपेण परिणत इवाञ्जनेयः, क्षत्रियकुलेऽवतीर्ण इव द्रौणिः, द्विभुजमूर्त्या प्रतिष्ठित इव कार्त्तवीर्यः, प्रधानः पौरुषेण प्रवीरो राजसूनुरेकश्चतुष्पथे प्रथीयसाऽनुबन्धेन खेलन्नसङ्ख्यपणितार्थदुस्तरं द्यूतमालोकितः कुमारकेसरी नाम। नाम च तस्यापरैर्द्यूतसहचारिभिरुदीर्यमाणमवबुद्धवान्। अस्मिन् सञ्जातकौतुकश्चाहमहो कुतोऽयमियन्तमसंभाव्यमिह खेलनायार्थं प्रस्तावयतीति नाथ! यावदालोकयामि तावत्किमालोक्यते भुवनमप्यवीरं मन्यमानो यत्रैव कुत्रचिद्धनीयसि दुर्गमे चास्थानेऽस्ति द्रव्यं ततोऽसौ विघट्य हठादुद्भटं सुभटभुजपरिघसङ्घट्टमन्यदप्यचिन्त्यमन्तरायकारणमानयत्यर्थजातम्। न चास्ति तत्पौरुषस्य किमप्यसाध्यमगम्यं वा प्रायस्त्रिभुवनेऽपि। अनन्तरमुद्भूतविकल्पेन चिन्तितं मया—नन्वेष बलवानवश्यमनेन द्यूतसम्बन्धिना महारसेन साद्भुतेन चामुनाऽध्यवसायडम्बरेण साहसेन च मरुतामपि त्रासकेन कनकार्थी मेरुमुत्पाटयति, रत्नेच्छया फणीन्द्रफणापटलमुद्दलयति, अर्थकामश्च गृह्णाति बन्दे कुबेरनाथम्। किन्नाम कपिमात्रकमेकाकी चाञ्जनेयः प्रखरदशकन्धरभुजापञ्जरगतामपि न लङ्कामा-

कुलीचकार, भीमश्च प्रविष्टो नागलोके विघट्य विषवृष्टिभीषणफणाफलक-दुर्लङ्घ्यमुरगशौण्डीरदुर्गं नापिबत्पीयूषकुण्डानि । तदितो निर्गत्य मा पुनः स्वर्णास्पदमिति नेदीयसीं लङ्कामाक्रामत्यतः पश्यामि कियदनुष्ठानः किमा-चरत्येष इति यावदवहितो भूत्वा तस्यैव पृष्ठमनुसरामि तावत्तथैव संवृत्तम् । एकहेलयैव परमसावेकस्मिन्नहनि दक्षिणं दिग्भागमङ्गीकृत्य निर्गतो नगरा-दुपान्तवर्त्तिनि ग्रामके च रात्रिमतिवाहयितुमेकस्य वृद्धकितवस्य वेश्मनि प्राविशत् । तेन च प्रणयाद्गन्तव्यं प्रदेशमापृष्टः स खलु सम्भाव्य नामग्रहगौ-रवेणाब्रवीत् । भोः पिप्पलक ! गन्ताऽहमितो दक्षिणेन सिन्धोः परकूलवर्त्ति-नममानुषप्रचारं स्थानम् । अथेदमाकर्ण्य झगिति भीतवानहम्—अये ! स एष मे स्पष्टतामुपेतो विकल्पः । सत्यमेव लङ्कापुरनिग्रही वीरोऽयम् । यथा रक्षसां पदमपहाय लङ्कामितो दक्षिणे सिन्धोः परपारवर्त्ती कः किलामानुषप्रचारोऽस्त्य-परः प्रदेशो यत्रैष यास्यतीति निश्चित्य तेनैव सार्द्धमहमप्यलक्ष्यवृत्तिना रूपे-णानुगन्तुमारब्धवान् । तथाऽसौ प्रबलवेगानुषङ्गिणा गतिक्रमेणाक्रम्य भुवं भूय-सीं प्राविशद्दक्षिणं देशम् । आसाद्य च मलयमण्डलमखण्डपदुभिः प्रयाणकैरा-याति तस्मिन्नुद्भूतनिश्चयोऽहमहो सुदूरमेतावतीमवनिमुल्लङ्घ्य प्रवृत्तश्चेद्गन्तुं तदेष साधयिता लङ्कापुरस्येति चेतसि विचिन्त्य त्वरितमेव पुरः प्रधाव्य समागत-वान् । आख्यातश्च व्यतिकरोऽयम्, इदानीं देवः प्रमाणम्, स पुनरागतो बलीयान् पुरुषप्रवीर इत्युक्त्वा विरराम ।

ततश्च राजन्नेतदाख्याय स्थितवति कङ्कालके सहसैव परमक्षिपद्रक्षसा-मीश्वरः शङ्कितान्तःकरणतरलितं मदानने चक्षुः । अथाहमाशङ्कितं स्वामिनो हृदयमाकलय्य प्रणयादकृत्रिमेण वचसा विज्ञप्तवान्—देव किमिति शङ्कया मनो व्याकुलयसि । यद्यपि दुर्वारभुजपौरुषप्रसरो वीरलोकः स्वर्लोकमकिञ्चि-दिवाक्रामति, मेरुं कसेरुमिवोत्खनति, पातालमालयक्रोडमिवाविशति, तथाऽपि न मे मायाप्रभावस्य प्रतिभटोऽस्ति त्रिभुवनेऽपि ।

योऽहं नाथ दिने निशां निशि दिनं चन्द्रेऽर्कमर्केऽपि च
प्रालेयद्युतिमन्धकारपटले तेजस्तमस्तेजसि ।
किञ्चाब्धौ स्थलमम्बुधिं स्थलपथेऽप्येवं करोमि क्षणाद्व-
स्तुव्यत्ययविभ्रमेण झगिति त्रैलोक्यमन्यादृशम् ॥

तदेव प्रसीद मे प्रेषणादेशेन येन कङ्कालकसहायोऽहमन्तराल एव त-

मागच्छन्तमपहस्तयामीति विज्ञप्ते मया, स्वामी विभीषणो यथाऽभिप्रेतमनुतिष्ठतु भवानित्यादिदेश ।

अथ सनाथः कङ्कालकेन तस्मिन्नेव क्षणे तस्याहमागच्छतो मानवस्य सन्मुखमुच्चलितवान् । अवाप्य च कियत्याऽपि च कालकलया मलयमण्डलमेकत्र महतो जीर्णवनगह्वरस्य गर्भे गलितघनतुलादण्डं चण्डिकाप्रासादमपङ्कयम् । आलोक्य तं नन्विह पुनरनाश्रयं काननमवेत्य कदाचिदसौ वीराध्वगो वसतये प्रविशतीति तमेवाश्रितवानस्मि । तत्र च देवीपदोपसेविना वेतालवर्गेणागत्य विधीयमानालिङ्गनकुशलप्रश्नादिसत्कारस्य तिष्ठतो मे झटिति परमसौ प्रहरमात्रायां रात्रौ "समागतो वीरः स एष इति" चाङ्गणकवर्त्त्येव दर्शितः कङ्कालकेन दृष्टे च तस्मिन्नुदारस्फूर्तावुत्पन्नचमत्कारोऽहमहो स्तोकमिवायमाख्यातो राक्षसचरेण । स्वरूपेण पुनरीदृशा कियन्मात्रममी भीमादयो भटाः, स्वर्लोकसुभटेभ्योऽप्यवश्यमतिशेते । तदस्तु तावदपरामस्यैव चेष्टामदृष्टचरितस्य कौतुकेन सवेतालपरिजनस्तिरोभूय निभालयामि मुहूर्त्तमपीति सम्प्रधार्य तथा स्थितवान् । अनन्तरमसावपि प्रविश्यान्तर्नमस्कृत्य च देवीमागत्य बहिरेव मण्डपान्तरुपाविशत् । तथोपविष्टस्य च तस्याम्बरपथेन परमाजगाम विदितपूर्वश्चास्माकं कपालभैरवो नाम विद्याधरजन्मा कापालिकः । तेन हि प्रणयादापृच्छ्यमानः प्रवीरोऽसौ "मथुरापुरनिवासी राज्ञः कलिन्दकेतोः सूनुर्द्यूतव्यसनानुसारिणा द्रव्येण दुःस्थितः प्रभूतं काञ्चनमनन्तं च विभीषणस्य कोशाजातमाहर्तुं हिरण्यपरिकरां लङ्कापुरीं प्रसाधयितुमुच्चलितो नाम्ना कुमारकेसरी" त्यादि यथावस्थमात्मानमात्मनोऽध्यवसायस्वरूपं चाख्यातवान् । उत्पन्नप्रतीतिश्चाहमहो साधु साध्वनेन परेङ्गितावगमकौशलेन । कङ्कालक! साधु त्वया लक्षितोऽयमिति रभसादभिनन्द्य तं राक्षसचरं सबहुमानमालिङ्गितवान् । इतोऽप्यसावुदग्रतद्विक्रमातिरेकपरितुष्टो महाव्रती झटित्याकृष्टिविद्यया दिव्यं कृपाणमानीय दत्वा चायुधकृते निरायुधाय तस्मै तथैव च स्वयमन्तरिक्षेण वर्त्मना निर्गत्य ययौ । सोऽपि राजपुत्रः करेकृतेन तेनासिना सह प्रविश्यान्तरायतनस्य स्थितो निद्रातुम्, अथाहमहो यादृगाख्यातस्तादृश एवायमसाध्यः सङ्गरेण । विशेषतः सहेतिरमुना कृपाणेन । यस्यास्य दृष्टिमपि वयमनीश्वराः सोढुम् । अतो मायैव प्रयोजनीयाऽस्मिन्निति वितर्कसमकालमुन्मीलितया धिया सह समये किमन्यदालोच्यते द्यूतव्यसनवानयं, तत्खलु मायाविना द्यूतेन प्रतार्य

प्रसाधयाम्येनमिति विनिश्चित्य तं देवीपरिग्रहं वेताललोकमेकत्र कितववृन्द-तया निरूप्य बहिराब्धिकं द्यूतमुपक्रमितवानस्मि । द्यूतरसोल्लोलकोलाहल-माकर्ण्य चासौ तदेकपरतन्त्रचित्ततयाऽऽकृष्टो भटः सरभसमभ्यन्तरान्निष्क्रम्य सारयित्वा च रमणस्य कृते तं खड्गमखण्डितव्यसनः खेलितुमुपक्रान्तवान् । अहमपि मायया कङ्कालकं विमानीभूतमधिरूढो विहितविद्याधराकृतिरात्मा-नमन्तरिक्षादवतरन्तमुपदर्शयन्नागत्य तस्मिन्नुपाविशम् । लग्नश्च हारितार्थश्च तदेव तिरोभूतराक्षसाकारं कनकमणिविमानमाधौ विधाय खेलितुम्, अथ महा-रम्भवति प्रवृत्ते द्यूतस्य भरे तथा रचितवानस्मि मायया द्यूतं येन मे विपर्ययेण तस्यासिरागतो हस्ते तस्यापि विमानीभूतः पर्यवसितो राक्षसः । सिद्धसमी-हितश्चाहमनन्तरे संवृत्य द्यूतमादाय च मण्डलाग्रं सोपस्करेण सह तेन वेताल कितवलोकेन तिरोभूतवान् । स तु लङ्कापुरगामी मनुष्यवीरो मानुषैरलभ्यस्य ग-गनचारिणो यानस्य लाभेन परितुष्टो विमानमित्यधिरूढः कङ्कालकस्य पृष्ठम् । तेनाप्यसावुत्पत्य सुदूरमम्बरपथेन नीत्वा मदुपदेशादेकत्र दुस्तराभोगभासुरे गरीयसि सागरस्य पयसां भरे क्षिप्तः । क्षिप्त्वा च पयोधिपातप्रसाधिते तस्मिन् लङ्कार्थपरिपन्थिनि क्षत्रियकुमारे विहाय मायामागत्य मिलितेन कङ्काल-केनानुगम्यमानोऽहमागतो लङ्काम् । आख्याय च वृत्तान्तमर्पितवानस्मि स्वा-मिनः करे कृपाणम् । अत्यन्तमुदितेन स्वामिना च विभीषणेन ममैवायुधकृते प्रसादादत्तः । स एष श्रीमतामधीनो मण्डलाग्रः । तापसी चेयं किंजातिरिति न जाने । कुतोऽपि हेतोरस्मत्पुरे लङ्कायां वल्कलावरणगोपितेनात्मना प्रतिदि-शमितस्ततो भ्रमन्ती सहसैव मे नयनगोचरीबभूव । दृष्टमात्रैव च मयि मद-नाज्ञीभूय व्यापृता ।

तथाहि—

वल्कलपटावगुण्ठनपिहिताऽसौ तापसी मया दृष्टा ।
कोशनिहितेव तन्वी खड्गलताऽनङ्गसुभटस्य ॥

किञ्च—

एषाऽनुमार्गमिह पर्यटनप्रयास-
भूरिश्रमाम्बुभरधौतशरीरयष्टिः ।
सद्योपिपायितजला मदनस्य हस्त-
भल्लीव मे झगिति हन्त हृदि प्रविष्टा ॥

ततश्चैवमवन्ध्यमकरध्वजकरायुधाघातबाधया विधुरीकृतो निरस्य नायकोचितं धैर्यमवधीर्य व्रीडामनुगन्तुमेनां प्रवृत्तवानस्मि। बाला तपस्विनी चासौ झटित्येव ततो नगरगर्भादुत्पत्य निरालम्बमम्बरपथेन निर्ययौ। मयाऽप्ययं नियतमनयोत्पातविद्यया दिव्ययुवतिः काऽप्यसाविति विनिश्चित्य तथैवोत्पतनप्रक्रियया पृष्ठलग्नेनाऽऽरब्धा गृहीतुम्। एकत्र कुत्रचिच्चन्दनवनवलयपरिमलोपगूढगिरिनिर्झरतुषारनिकराश्चितैर्वायुभिरनङ्गदहनोद्दीपनपटीयसि प्रदेशे मया मायामयं द्विजस्य रूपमाधाय वचश्छलेन छलितयाऽपि तथैव छलोक्त्या छलितोऽहमनया। निराकृत्य मां पुनरुत्पपात व्योमनि। रे प्रतार्य मां गता हतांशेयमिति तत्कालमुत्थितमहात्विषा कोपानलेन झगिति पिङ्गलीभूतलोचनोऽहमाविर्विधाय तदेतदात्मनो नैशाचरं रूपमनुपृष्ठधावितः पलायमानामिमां विधृत्य सम्प्रतीह रावणो बलादनिच्छन्तीं सीतामिव प्रवृत्तो व्यापादयितुम्। अत्रान्तरे च जगदेकरक्षिता क्षत्रियवरिष्ठो झटित्येवाधिष्ठितः पुण्यैरमुष्या भवान्। भवता तु सह सङ्गरे न नाम शवपिशितपेशिकोत्कर्त्तनकर्मैकशक्तिः कर्त्तिकेयमर्हत्यायुधीभवितुम्। अतः स्मृतिमात्रोपस्थितिपटीयानेष संस्मृतो दिव्यासिः। असिरप्यसौ पूर्वमेव मे कथितवान् स्वप्ने यथा किल वैकुण्ठावतारे पुंसि व्यापारितोऽहमशस्त्रतया भवतो भविष्यामीति। अजानता च मया तदंशावतीर्णे त्वयि प्रयुक्तोऽनुकृतवानेषोऽपि यथोचितं पूज्येषु। तेन हि तवायत्तशक्तिस्तवैवायमर्पितः कृपाणः। व्रतिन्यामस्यां तु योषित्यनौचित्येन विषयस्य, त्रासेन वा दण्डधरस्य (भग)वतः, प्रबोधेन वा महतो विवेकस्य, वश्यतया महाशयस्य मनसो झटित्येकपद एवासौ विभ्रश्य गतवान् स तादृग्गरीयानप्यनुरागः। तद्भो वीररससिद्धिप्रमु(दित)दिगीशरसनाग्रफलकोत्कीर्णपरमपौरुषप्रशस्ते पार्थिवैकतिलक श्रीमन्नेष ते कथितो वृत्तान्तः। प्रहिणु यास्यामि सत्वरमिदानीमिति। अनुज्ञातो नृपेण स खलु शौण्डीरजन्मा निशाचरो झगित्येव सूरविद्रावितोऽन्धकार इव तिरोबभूव।

सा च तापसी निलीनकौणपभयादतिक्रान्तकम्पा व्यपगताशेषप्रस्वेदसंप्लुतिरुत्पन्नसुस्था सुस्थीभूतहृदयवृत्तिरनाकुलेन चक्षुषा सर्वाङ्गमुदीक्ष्य मेदिनीनाथं मुहूर्त्तमन्तर्मनस्येव निसृष्टार्थं विचिन्त्य किञ्चिद्वाञ्छितया दृशा निक्षिप्तैः क्षालयन्तीव मृत्युमुखविनिर्गतं हृदयमविरलैरश्रुबिन्दुभिरभिभूयमानशब्दं रोदितुमारब्धवती। राजाऽपि तामवनतमुखीमवेक्ष्य तथा रुदतीमुद्भूतकरुणाञ्चितेन चेतसा चिन्तितवान्। हा हा कोऽयमस्याः क्रूरग्रहेण कौणपेन मुक्ताया वर्षा-

नक्षत्रवृत्तेरिवानिवारितप्रसरो नयनघनजलासारः। सहजोष्णश्चायमनया स्वहृदि पात्यमानोऽपि हृदयं मदीयमुत्तापयति। किमिदमस्मत्समीकसङ्कटावधारणेनार्द्रत्वमन्तःकरणवृत्तेः, उतस्विदात्मनोऽनुभूतमरणसामीप्याकूतभावनम्, आहोस्विदसमीहितमक्षतस्य रक्षसोऽस्य गमनं, किं पुनरप्रतिसमाधेयमुपजातं समयसपर्यादिषु स्खलितम्, अथान्यदुःसहमुदग्रदुःखानुस्मरणं च किञ्चिदापन्नमेतस्याः, क एष प्रकारः, किमिह कालानुरूपमुपयुज्यते वक्तुं, कथमेनामज्ञा(त)तत्वोऽहं यन्त्रपुत्रिकामिव रुदन्तीं निवारयामीति वितर्कजातमातन्वति नरेश्वरे समुचितावसरे कोविदाऽसौ तपस्विनीकन्या सहसैव नियम्य दुर्धराटोपसंप्लवं बाष्पवेगमावरणसमधिकेनोत्तरीयवल्कलस्यैव मृदुनाऽञ्चलेन मुखाम्भोजमपमृज्य निवेश्य च सर्वतः कुवलयदलकोमलं चक्षुरनुच्चमधुरया गिरा जगाद।

प्रेतीभिर्भ्रियमाणशोणितजलं निर्लूयमानामिषं
वेतालीभिरुपास्यमानमभितः कङ्कालरङ्काधमैः।
अन्तश्चेदमुदञ्चितानलचिताचुल्लीभिरुद्भासितं
पश्य प्रेतवनं महानसमिवामीषामसृग्भोजिनाम्॥

अथवा महासङ्कसम्भृतपथापणं निवासनगरमिव भूतलोकस्य।

तथाहि—

मौलौ बद्धाऽऽन्त्ररज्जुः प्रजरदजगरग्रन्थिगाढोग्रनाग-
त्वग्वासाः स्कन्धपीठे कृतमलघुदलं चास्थिदण्डं दधानः।
फेत्कारैर्दत्तहक्कः सकलमपि कुलं कम्पयन् कौणपानां
वेतालस्तालदीर्घो भ्रमति पितृवने पत्तने दण्डपाणिः॥

अपि च समन्तादिह प्रेतपरुषास्थिपञ्जरपरीतमूर्त्तयः शूलिकाशङ्कवोऽपि कङ्कालतामापुः, इह खलु विभीषकानलसनाथमौलयः शाखिनोऽप्युल्कामुखायन्ते, इहान्तः क्रीडासङ्क्रान्तकौणपेन मुक्तफेत्कारमुखराणि नरकरङ्काण्यपि राक्षसत्वमापद्यन्ते, इह हि शिखरदेशविश्रान्तकौशिकघूत्कारैरलघुहुङ्कारभासुरा वटस्तम्भा अपि सिद्धतामुपेतवन्तः, इहापि प्रबलपवनयोगिन्यश्चिताभूतयोऽपि खेचरीभूताः, इह करालकोटरकुटीरकानुषङ्गिपिङ्गलावर्गेरसितैरसीमकिलकिलारावरौद्रोऽयमश्वत्थभूरुहोऽपि भूतभावेन तस्थौ, इहाप्युपरि परिनिविष्टशिवाकारपरिवर्त्तिताकृतिर्वध्यशिलाऽपि विभीषिकात्वेन परिणता।

किञ्च—

दोर्दण्डोत्क्षेपवेगानिलनिबिडभृतश्रोत्रनासान्धरन्ध्र-
ध्वानैर्लोलास्थियन्त्रक्वणनपटुखटत्कारसृष्टैश्च पादै (वाद्यैः?)।

कुर्वाणः स्वाङ्ग एव प्रगुणयति लयालम्बिनी गीतवाद्ये
नृत्यत्येषोऽत्र पात्रीकृतरुधिरसुरानन्दनीचः पिशाचः ॥

अत्र वा—

एकं कक्षान्तरेऽन्यत्पृथुनि करतले पश्य शेषं च मांसं
भृत्वा वक्त्रेऽपसर्पन् हठहरणपरैरावतो भूतडिम्भैः ।
सम्भ्रान्तो याति रुद्धश्चलति करधृतः क्रोधनो हुङ्करोति
प्राप्तोऽङ्के कूर्परेण प्रहरति रसति न्यञ्चति प्रेतरङ्कः ॥

इतश्च प्रभूतवात्सल्यादुत्सङ्गमारोपितेन भूरिभिरभीष्टनरजङ्गलग्रासैरनेकशस्तर्प्यमाणेनापि निकामघस्मरतया डिम्भकेन झटित्येव कीकसैकसारे वपुषि ललत्पिशितवल्लूरशङ्कया ग्रासीकृतं चर्व्यमाणमजिनच्छटैकमाकर्षन्ती कुचमहो पश्य पश्यातिहास्यमसावुत्तानितमुखी सदन्तनिष्घर्षमुन्मुक्तपूत्कारं चाक्रन्दति प्रेतजाया । इत इतोऽप्यहह पिशाचेन यूना ज्वलतश्चितोदरादाकृष्टमीषदाप्लुष्टकुणपमेकहेलयैव संवीक्ष्य हर्षादारब्धकहकहारावमुखरमुदञ्चितकर्त्तिकमुत्तम्भितकपालमुत्तालवेगं च साकाङ्क्षमेकतो जरत्कङ्कालचक्रम्, अन्यतः प्रेतसङ्घातः, अपरतो वेतालवृन्दमुद्भटं च, परतो भूतरङ्काणां कदम्बकमेतदेतदायाति दारुणारम्भनिर्झरमालोक्यताम् । कियद्वा प्रलयकालोपसंहृताशेषनरकरङ्कसङ्कुलितमर्त्यलोकानुकारिणः सर्वतोऽप्यशुभबीभत्सदर्शनस्य स्वरूपमाख्यायतेऽस्य महीयसः श्मशानवलयस्य महतामधिष्ठानं हि प्रकृष्टरिष्टानामेतत् । तदेतदहो कल्याणिन्न खलु निखिलमङ्गलोपकरणनिर्मितैकमूर्त्तिना लक्ष्मीसङ्क्रमणसुभगेन भवता स्थिरमेव स्थीयमानं बुध्यामहे इत्याप्तोपदेशपेशलमभिधाय तस्थौ ।

राजाऽप्येतदाकर्ण्य ननु भद्रमसौ ब्रवीति येनात्र सर्वतो जरद्भूतरङ्कोपचर्यमाणातिथिरकुथितकुणपगलजङ्गलोग्रगन्धदुर्विषहः प्रतिपथमापानकरसोत्सवनिविष्टकटपूतनाऽवलिकलितकपालकर्परोदरनिधीयमानधाराग्रनिर्गताविरलवसाशीकरनिकुरुम्बवाही ज्वलदभितचिताहुताशनशिखोद्गीर्यमाणगुरुधूमघोरणीसमृद्धः प्रसर्पत्येष सन्ततमसेव्यो व्यसुवनसमीरणः । स्फोटयन्ति च विशान्तः श्रुतीन्द्रियममी प्रकामडामराः प्रमुदितापारफेरवसमाजैरुदीर्य(माण)मांसलारसितमालिनो निष्ठुरा ध्वनयः । तन्ममाऽप्येतन्मतं यदितोऽपसृत्य प्रशान्ते क्वापि तपोधनाश्रमे सगौरवमवस्थानेन स्वस्थां विधाय विस्रब्धमेनां काऽसौ कस्यासौ कुतोऽसौ किमर्थमसौ लङ्कां गतेत्यादिकमशेषं व्यतिकर-

मादितः पृच्छामीति चेतसि विनिश्चित्य मानयन् सदैव देवतावर्गमभ्यग्रवर्त्ति-नीमधिष्ठात्रीं च तस्याः श्मशानभुवो भगवतीं भीषणेत्यभिधानवतीं दुर्गा-मग्रतो भूत्वा फालाग्रमिलितकरसम्पुटाञ्जलिः स्तुत्या प्रणनाम ।

विद्युत्पुञ्जोग्रनेत्रं पृथुचपलललज्जिह्वमुद्वर्तगल्लं
सृक्कान्तोदग्रदंष्ट्राप्रकटमसरलस्थूलपिङ्गोर्ध्वकेशम् ।
वक्त्रं कल्पान्तकालप्रबलघनघटाघोषघोराट्टहासं
चण्ड्याः स्वर्गारिवर्गग्रसनरसकषद्दन्तदण्डं नमामि ॥

कृतप्रणामश्च देव्याश्चलत गम्यते यथोचितमाश्रमस्थानमित्यन्तरत्यन्त-शुद्ध्या सूक्त्या प्रवर्त्तितचेतसं तामग्रतः कृत्वा वृत्तान्तबोधेच्छुः कुतूहला-दाहितगतिवेगः क्षणेनैव निर्जगाम तस्मादमङ्गलभुवः श्मशानात् । नगर-गर्भमासाद्य च मनोविश्रम्भवसतेराशाया विश्वभूतिरितिवृद्धतपसस्तपस्विन्या मठं जगाम ।

तस्मिन्मध्यनिशामतीत्य सहसैवायातमेकाकिनं
सा राजानमुदीक्ष्य तच्च वनितापात्रं तपोलङ्कृतम् ।
कस्मादेष किमत्र भूपतिलकः का तापसी चेयमि-
त्येवं विस्मयमागता भगवती चक्रे तयोः स्वागतम् ॥
नृपतिरथ वितीर्णातिथ्यया विश्वभूत्या
विजनरजनिचर्यां तापसीं चानुपृष्टः ।
अकथयदसिलाभं राक्षसाद्रक्षिताऽसा-
विति च निजकथां(तां) सि(ध्ध)सारस्वतश्रीः ॥

इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
तापसीरक्षणं नाम सारस्वतश्रीपदाङ्कः
पञ्चम उच्छ्वासकः ॥

---

## षष्ठ उच्छ्वासः ।

ततस्तथैव च क्रमेण परिणतेऽपि मध्यरात्रापवर्त्तनक्षणे कौतुकभरादुत्सु-कोऽसौ दृशैव भगवत्या विश्वभूतेरनुमतिमादाय मेदिनीप्रभुरभिमुखीकृतया स्वयमभ्यागतोपहारपङ्कजदलमालयेव विशाललतिया दृशा सम्भाव्यमानम-हसं तामभिनवागतां तापसीमुवाच—नन्वसामान्यशीले ! साधुपथप्रचारिणि ! विशदाशये ! कथय का त्वम्, कस्य कुलं विष्णुवक्षस्थलमिव कौस्तुभं वृत्तविमला

भूषितवती, किमभिधानाऽसि, किमर्थमिदमभिनवा लतेव जटावल्कलग्रहणमकार्षीः, अवतीर्णाऽसि कस्मिन्नपि लोके, नगरं च कतममध्यासिताऽसि, किमिति च भवादृशामनुचितप्रचारमसृग्भुजामास्पदं लङ्कां गतासि येनैवमस्य दुरपसदस्य पतिताऽसि गोचरे रक्षसः, किंहेतुश्चैष ते महदर्शनेन शशिमयूखयोगेनेव नयनेन्दुरत्नविगलितो वारिप्लव इति सर्वमशेषतोऽपि ज्ञातुमीहते कुतूहलप्रेरिता मन्मनोवृत्तिः, अद्याऽपि यामिन्यपि महत्येवाऽऽस्ते, तदत्वरितमावेद्यतामित्यादि पृष्टा मनुजपरमेश्वरेण सा सहर्षमुपदर्शितप्रश्रयं च सरभसमभाषत । कल्याणिन्! इयमननणीयसी कथा नूनमपृच्छतोऽपि ते कथ्यते, किं पुनः प्रश्नाभिनिविष्टचेतसः, तदङ्ग दत्तावधानमवधार्यताम्। जानन्ति भवन्तोऽपि यथा किल सकलेषु सारतया प्रसिद्धो भुवनसन्निवेशेषु, स्फारो विभूतिभिः, अपारः प्रथितसुखोपभोगविभ्रमेण, सारः सहजहर्षोपशालिना विलासिलोकेन, सर्वतः स्फुरत्पन्नगफणामणिप्रकरैर्विश्रान्तरत्नमूलोद्देश इव संसारसागरस्य, खनिप्रतान इव ब्रह्माण्डरोहणस्य, बुध्नबन्ध इव त्रिलोकीकल्पलतिकायाः, मूलदेशमासेदुषा कूर्मराजेन सञ्जातशिलानिवेशः प्रथमभूमिकाभोग इव विश्वमहाप्रासादस्य, दूरमुद्दण्डकायकाण्डेन प्रसरता वासुकिफणासहस्रवलयेन विलसितैकातपत्रश्चक्रवर्त्तीव भुवनवर्गस्य, वलभिदाहतानां शरणत्वेन विख्यात इत्याश्रितो दैत्यैः, अनन्यसदृशीं सौन्दर्यमुद्रामुद्वीक्ष्य मा विषादमेष्यत्युपरिवर्त्ती स्वर्लोक इतीव प्रसारिणा स्थगितो भूवलयफलकेन, विभूतिविजिताखिलजगत्तया कीर्त्तिकाम इवोत्तम्भितजयस्तम्भः क्षितिधारिणा शेषेण, तपनप्रचारविरहितोऽपि सञ्चरद्भुजगराजपुत्रोत्तमाङ्गमणिमयूखवलयैरुद्गतानेकरविमण्डलः, निधीनामास्पदं रसातलमित्यनङ्गेन निक्षिप्ताभिः सहजशोणयाऽधरश्रिया सिन्दूरमुद्राङ्कितमुखीभिः स्वसर्वस्वकलशीभिरिवाभिरामगर्भैः कुम्भीनसपुरन्ध्रिकाभिः, उभयभुवनभरोद्वहनाय दत्तस्कन्ध इवाधिष्ठितोऽपि मूलमुपरिभूतो भव्यतया, जगतामतुल्यगुणयोगिना प्राणिवर्गेण संभृतोऽस्ति संसारफलारामः पातालनामा तृतीयो लोकः ।

यस्मिन्नत्यन्तविततेषु प्रधानेष्वष्टसु नागकुलेषु लब्धप्रसूतयः सहजशौण्डीराः प्रभूतबलशालिनः स्वेच्छारूपधरास्त्रिष्वपि भुवनेष्वनवरुद्धगतयः प्रभाविनः प्रचरन्ति भोगिनो लोकाः । ये तावदास्तां दिव्यमभिरामावयवसुन्दरं कामरूपं, इतरमपि सरलकीटकप्रायमाकारमधितिष्ठन्तस्त्रैलोक्यगुरुणाऽपि महेश्वरेणात्मनोऽलङ्कार इत्यङ्गीकृत्य गौरविताः; विक्रमे तु किमुच्यते तेषां यन्मु-

खलालयाऽपि स्पृष्टः परो विपद्यते, परार्थेषु निस्पृहास्त एव ये हि लोकैरात्मनो निधीनां रक्षाधिकारिणः कृताः, धृत्तावदैन्यं च किञ्चिदाश्चर्यकारि येषां योगिनामिव वायु(रा)हारः, स्थेम पुनस्तेष्वेव येनातिवृद्धोऽपि शेषः शिरसा कुसुमकलिकावल्लीलयैव सगिरितरुषण्डसागरमहाभरामुर्वीं बभार ।

किञ्च—

नानापथा सुगुणभङ्गिषु किं किलैक-
मावर्ण्यते फणभृतामपरैव सृष्टिः ।
येषां शिरस्युदितमस्थिलवैकमात्रं
व्यापार्यते जगति रत्नमिति प्रवीणैः ॥

यत्र च विप्राकारपरिणताय हरये प्रदत्ताशेषकाश्यपीसुकृतफलादिव निवासमासादयामास राजा दनुजेन्द्रशेखराभरणं बलिः । अपि च यत्र कथञ्चन वसुन्धरोद्धरणप्रसङ्गावासप्रवेशो विशेषरम्यतोपलोभित इवाद्यापि न खलु निर्गन्तुमीहते भगवान् वराहजन्मा जनार्दनः, कूर्मावतारश्च पुनर्वरमवस्थितिविनिन्ये पङ्काम्भसि निमज्ज्यालुठन्नास्ते तथाऽप्युत्कृष्टविष्टपालोकनकुतूहलीव नान्यत्र भुवनेषु स्थितये बध्नाति मानसीं वृत्तिम् ।

अथवा—

दृष्टं यन्न कुतोऽपि यच्च तपसा तीव्रेण संप्राप्यते
दुष्प्रापं द्युपतेश्च यद्यदपि च प्राप्यं प्रसन्ने हरौ ।
तन्निःशेषमशेषसृष्टिविषयं सारं च रम्येषु यः
सूते वस्तु किमौरगस्य जगतस्तस्यान्यदावर्ण्यते ॥

तस्मिन्नशेषसुखसम्पदां प्रसवनपटीयसि पातालनोके रङ्गावलीवलयमिव प्राङ्गणभुवः, चित्रमिव भित्तेः, आभरणमिव योषितः, कुसुममिव लतायाः, त्रिभुवनश्रियः शोभाविष्कारकारणमस्ति नगरमिन्दीवरं नाम ।

किं तस्य स्तुतिविस्तरेण गुरुणा यस्मिन्पुरे यत्फलं
संसारस्य भवन्ति ता मृगदृशो यासां मुखप्राङ्गणे ।
दैवादापतिते जगत्यशशिनि स्वर्भानुरिन्दुभ्रमा-
दामोदासवधावितालिवलयच्छद्मा परिभ्राम्यति ॥

तत्रास्ति गरीयसा कलापेन सम्पदामधिष्ठितः प्रतिष्ठितो महसि वासवस्य, वशीकृतारिशौण्डीरनिकरो हर इवाग्नेयसायकधरः प्रतापेन, हरिरिवापूरितशङ्खस्वनो यशसा, विरिञ्चिरिव दर्शितशापानुग्रहशक्तिराज्ञया, शिरसि विस्फारिणा विनी-

लफणाफलकडम्बरेण हरनयनदहनदाहोपशान्तये जनितजलधरवितानको मकरकेतुरिव निरातपं लोकमध्यासितः, सरसनलिनीदलातपत्रपरिशोभितो वरुणराज इव तलगतमधिष्ठातुमुद्यतस्तोयं, घनदलतमालशेखरो विन्ध्य इवागस्त्यमुनिवञ्चितस्त्रपया पातालमधिष्ठितवान्, उपरि प्रेङ्खता प्रसरदुरुफणामण्डपमणिकिरणचक्रेण शिरस्युदितभानुरुदयशैलाधिपुरुष इवाहिभुवनेऽपि प्रचारयितुमर्कमायातः,प्रणामघटितेन स्वच्छतरभूतिसम्पर्कपाण्डुना चण्डीशचरणरेणुकणिकोत्करेण प्रत्यहं भरितशेषाक्षतपवित्रमस्तकः, तारुण्यतरलिमोत्तालनललितपातालकामिनीकटाक्षचयचामरोपवीज्यमानमूर्तिरपमितपराक्रमो वन्द्यः काकोदरभटानां, मान्यो गीर्वाणवर्गस्य, मित्रं त्रिविष्टपस्य भर्तुः, आप्तः पातालनायकस्य वासुकेः, चराचरगुरोश्च भगवतः प्रियसेवकः शङ्करस्य, महीयसि महात्मनः शङ्खपालस्य कुलेऽवतीर्णः क्षत्रियमहान्वयोद्योतमाणिक्यं राजा राजशौण्डीरः शिखण्डतिलको नाम ।

येन हि निसर्गजलयोगसौहृदात्पयोधिपक्षपाती तदङ्गमथनविन्यस्तमन्दरगिरिभ्रमोपयोगरज्जुतारूपमपकारमनुस्मृत्य वासुकेः प्रकुप्यत्कूर्मराजः सपदि प्रतापसङ्कोचितकटाहकर्परः पराहतशक्तीकृतश्शङ्के नचेज्जगत्रयोद्वहनमहाशक्तिना तेनादिकूर्मेण तादृगम्भोधिपक्षपातविषयिणः कोपात्कटाहपिठरैकपालीस्पन्दनमात्रकेणैव क्षणादेतदफणीन्द्रमपातालल्लोकं च कृतं भवेद्विश्वम् । तथा च यस्य भुजयोरवष्टम्भेन पृष्ठतः पातालरक्षानुचिन्तामपहाय पन्नगानामधीश्वरो वासुकिरनाकुलेन मनसा देवस्य कैलासवासिनो धूर्जटेरापीडसंयमोपकरणभावमालम्ब्य सुरसिन्धुसलिलशीतलोद्देशिनि सदैव जटावने विलसति । तस्य चास्ति सम(स्त)क्षत्रियाणामलङ्कारतिलकस्य प्रेयसी निजस्यैव विजयकमलेव मण्डलाग्रस्य, भूरिव भुजस्य, लक्ष्मीरिव वक्षसः, सरस्वतीव वक्त्रस्य, आज्ञेव भ्रूलताग्रस्य, वीरश्रीरिव पराक्रमस्य, कीर्त्तिरिव गुणकलापस्य, बुद्धिरिव व्यापारस्य, नीतिरिव व्यवहारस्य च, प्रणयिनी हृदयस्य, सुवंशप्रसवतया मुक्तेव सुवृत्तनिर्मला, संश्रिता यौवनेन, पूरिता रूपेण, परिगता लावण्येन, सम्भृता सौभाग्येन, विनयवती यशोवती सकललक्षणवती च धर्मसहचारिणी प्रधानाऽन्तःपुरपुरन्ध्रिषु विजयरेखा नाम । तस्याश्च पतिरेव दैवतं योषितामिति तदङ्घ्रिसेवानुषङ्गान्मिलितनखमणिहृदान्तःकिरणवारिणि मज्जनविशुद्धेन चेतसा सतीव्रतमाचरन्त्याः सततमुल्लसितनेत्र-

नलिनोपहारैस्तदङ्गपूजाविपञ्चनेन प्रसन्नाभिरिव देवताभिः प्रदत्तमभूदेकमत्यन्तसुकुमारतया कटाक्षटङ्किकाभिरिव घटितं परमेष्ठिना, नाभिकमलपरिमलक्षोदैरिवोद्वर्तितमुपेन्द्रेण, मौलीन्दुकिरणैनेवापमार्जितं पुरजिता, निजशरप्रभावेणेवाधिष्ठितमनङ्गेन च, त्रिभुवनैकसारमुदयसुन्दरीतिनाम्ना पुत्रिकारत्नम् ।

यदीयेषु प्रथममेव तावज्जन्मनो महोत्सवप्रभुभेषु षष्ठीजागरणकृते सूतीगृहे द्वारि वाद्यमानघटध्वनितकैतवाल्लब्धजगज्जयाशा इव सङ्कल्पजन्मा भुजप्रकोष्ठमसकृदरवाटोपमास्फोटयाञ्चकार । माणिक्यमणितोरणावचूललम्बिताश्च ललितगलकन्दलविलासवासोचितावतीर्णपात्रप्रमोदेनेव सुदूरमुद्यतकराः प्रविशदन्तःपुरपुरन्ध्रिकालाङ्कुरचामरसमीरचलिताङ्गवल्गितैरुदर्गलं नृत्यन्तिस्म मुक्ताकलापयष्टयः । पुरतोऽपि नामकरणादिषु सर्वेष्वपि मङ्गलोत्सवेषु दिष्टिवृद्ध्यर्थमधिभवनमवकीर्यमाणामन्दसिन्दूरधूलिभिरधिकाधिकं पुरस्य पल्लवितं हृदयरागेण । सा च मुरजितोऽवतारस्य पुंसः करे लगिष्यतीति गणकैरावेदिता निर्वाणमिव योगिना, सुचरितमिव सज्जनेन, व्रतमिव तपस्विना, धनमिव कदर्येण, जीवितमिव कातरेण, प्रतिदिवसमुपोढया प्रीत्या पितृजनेन पाल्यमाना वत्सरपरावृत्तिक्रमेण निजसमयसम्भ्रमप्रगुणमनणुलावण्यलिप्ताङ्गभूमिकसुन्मिषितत्रिवलिललितरङ्गावलीकं उपरि परिभ्राजमानकुचकलशमनङ्गस्येव कृतप्रथमप्रवेशं मङ्गलोपचारं, चन्द्रलेखेव वर्षात्ययं, माणिक्यदीपिकेव शाणनिकषम्, अम्भोजकलिकेव विलासं, लेख्यपुत्रिकेव वर्णकन्यासम्, आदर्शमूर्तिरिवोद्वर्तनं यौवनमाससाद ।

यस्मिन्नुरोजकलशाङ्कितवेदिकायां
तस्यामभूदभिनवं मकरध्वजस्य ।
राज्येऽभिषेचनमतः खलु सम्प्लुताऽसौ
सर्वाङ्गमुल्लसितकान्तिजलप्लवेन ॥

ततश्च—

चपलालोकधारिण्या प्रावृषेव निरन्तरम् ।
भृता तारुण्यलक्ष्म्याऽसौ लसल्लावण्यवाहिनी ॥

तथा हि—

लावण्याम्बुभरे स्मरस्य वहतः पार्श्वादिव प्रच्युत-
स्तस्यां स्वैरमितस्ततः परिकरात्कोऽपि क्वचिल्लग्नवान् ।
पत्राङ्को मकरः कपोलपुलिने दृग्रूपिणो मार्गणा-

स्तीरेऽपाङ्गभुवस्तथाऽलिकतटे भ्रूव्याजमिष्टासनम् ॥

अथ तथा नवत्विषा तारुण्येन वितीर्णकान्तिसौन्दर्यसम्पदमुदीक्ष्य दुहितुः पिता चिन्तितवान् । ननु यथेयमेवमुन्मीलिताप्रतिमरूपसारा कुमारी तथा यदि कथञ्चित्पातालभुवनस्य राजा वासुकिः पश्यति, दृष्ट्वा च झगिति गच्छत्यभिलाषम्, अभिलष्य च भरादर्थित्वमुपदर्शयति, दर्शितार्थिभावश्च प्रेम्णा पीडयति, तदा नूनमलङ्घ्यत्वात्स्वामिवचसाम्, अप्रतिकूलत्वादासवृत्तेः, प्रार्थितार्थसम्पादकत्वाच्च दानधीरस्य, न नाम धर्त्तुमुपयास्यति, न वेदृग्रम्यरूपानुरूपं वरमपहाय कन्यकेयमननुरूपस्यास्य भुवनैकचक्रवर्त्तिनोऽपि शक्यते दातुम् । अतस्तथा क्रियते यथाऽसौ नास्य नयनयोः पथमुपैति श्रुतेर्वा गोचरीभवेदिति विचिन्त्य विहाय पातालं कृते तस्यास्तरलवेलाजलोर्मिजनितसङ्घट्टविघटितानेकशुक्तिमुक्ताफलप्रकरैरलङ्कृतक्रीडागिरिकिरीटिनि प्रतिप्रदेशमुद्भिन्नविद्रुमवनोदञ्चन्मरीचिमण्डलारुणिमरमणीयपरिसरे सरसकर्पूरभूरुहामोदसुन्दरोद्यानराजीविराजिनि विसारिण्येकतः समुद्रस्यान्तरद्वीपके सकलसुखानुकूलपरिकरं कन्यावरोधमुपकल्पयामास। तत्र च ब्रह्माण्डगर्त्तोदरनिधानकलशीव सर्वतोऽपि रक्षकैरधिष्ठिता कञ्चुकिभिः सा नाम कन्यका निकामचतुराभिरनेकसङ्ख्यया सखीभिरनुकूल्यमानान्तःकरणवृत्तिरवस्थितिं चक्रे ।

तदीयपितुः शिखण्डतिलकस्य च नितान्तमासस्य प्रणयिनः पद्मकुलाभरणरत्नस्य रत्नमौलिरितिनाम्नाप्रसिद्धिमतः सेनाधिनायकस्य वेणीमतीति जायायां सुता जन्मन्यपि निरपत्यतया बहुमता मनोवृत्तेरभूदेकैव पुत्रिका । सा चाहं तारावली नाम समवयःशीलतया परमं विस्रम्भमन्दिरमाचलनजल्पनज्ञानवासरादखिलबालखेलनप्रकारसहकारिण्यभूवमतिप्रेयसी सखीपदे तस्याः । अनन्तरमसावनल्परूपाऽभियाच्यमाना क्षत्रियैः, अधिरूढयौवनेति चिन्त्यमाना पितृभिः, अभ्यर्थितेत्यनुमोद्यमाना बन्धुभिः, अनङ्गस्वीकृतेति प्रवर्त्यमाना सखीभिः,प्रतिदिवसमशेषयोषिद्भिर्वार्तया निवेदितानालेख्यपटदर्शितान्प्रत्यक्षीकृतानस्तोकरूपानाविर्भावितगुणानद्भुतचरित्रानुदर्शिताधिपत्यप्रलोभान् क्षत्रियकुमारकांस्तृणमिव गणयन्ती, त्रिभुवनविहारिणो विद्याधरानपि हेयबुध्या विभावयन्ती, मन्मथादित्रिदशरूपचित्रादपि दृशं निवर्तयन्ती, नितान्तमुत्तामयामास पितरौ । केवलं मया सह पुरुषदर्शनद्वेषिणी विचित्रपत्रच्छेदविधया रुचिरचित्रालेखनविवादविभ्रमैरनणुवीणावेणुवादनैरमन्दकन्दुकक्रीडाभिरालम्बि-

दोलाविलासैरभिमुखरकीरसारिकालापकौतुकैरनेकगृहमृगमरालचन्द्रकिक्रीडनैरभिनवलतानिषेवणप्रपञ्चैरुन्मिषितारण्यकुसुमाहरणकेलिभिः क्रीडाहृदनिमज्जनैरनवरतमात्मानं विनोदयन्ती गमयति परावर्तमह्नाम् । एवमस्याः शैशवकलाखेलनसुखान्यनुभवन्त्याः प्रयान्ति दिवसाः ।

अथ कदाचिदेकस्मिन्नहनि पूर्वगिरिसङ्गते भगवत्युदयश्रिया सञ्जनितरागे भानुमति, भानुदर्शनाधिष्ठितविकारास्विव प्रबोधतरलितारविन्दपत्त्रेक्षणासु कमलिनीषु, कमलोपभोगलम्पटासु परितः प्रसर्पन्तीषु मधुपमालासु, वेलावनलवङ्गसुप्तोत्थितासु समुद्रसैकतोत्सङ्गमनुसरन्तीषु विहङ्गमश्रेणिषु, प्रातर्विधेयकारितया च परिगृहीतेष्वन्तःपुरपरिजनेषु, सुखप्रबुद्धायां निर्वर्तितनिखिलनेपथ्यपत्त्रालकरचनादिदैवमातिकक्रियानिराकुलायां विलासवेश्मनि सुखनिषण्णायामासने, समन्तादखिलकेलिकलाकौशलवतीभिः काभिर्नक्तमाकर्णितोद्यानदीर्घिकाचक्रवाकवियोगवेदनाक्रन्दमतिक्रान्तं निवेदयन्तीभिः, काभिर्मिलितलीलामृगमिथुनवर्तीर्लता निदर्शयन्तीभिः, काभिरुद्दृढवधूकृतारतश्रवणवक्रितग्रीवान्पारावतपत्त्रिणः प्रकाशयन्तीभिः, काभिस्तत्समयनिद्रापनोदमूढानि परस्परमपश्यन्ति मरालकद्वन्द्वानि घटयन्तीभिः सखीभिरावृतायां तस्यामेकहेलयैव ससंभ्रमं प्रभातगीतावसरसाधकमागत्य मयूरकाख्यं किन्नरमिथुनं पुरस्तादेकमालेख्यसखमेलालतावल्कनियमितं पटं निचिक्षेप ।

भ्रूशिखरसंज्ञिता चाहं तया तमादाय त्वरितमुन्मुच्य चान्तर्दिव्यमुद्रासिताय( ता )क्षिपत्त्रकपताकं जयस्तम्भमिव कामस्य मनोहरालेख्यपरिणतं पुरुषमवलोक्य त्रिभुवनाद्भुतरूपविस्मिता सेवकौचित्यमनाचरन्ती किन्नरमपृच्छम्—हंहो मयूरक ! निवेदय कोऽयं प्रतिबिम्बसुन्दराकृतिरिति प्रोक्ते मया सोऽब्रवीदद्य समुद्रान्तर्द्वीपकगिरौ क्रीडया रजनिमतिक्रम्य समागच्छतोरेकत्र विचित्रतरुसुन्दरोद्यानशालिनि जलानामन्तरस्थले निपतितोऽयमावयोर्नयनगोचरीबभूव । दृष्ट्वा च किमेतदिति सकौतुकमुत्क्षिप्य वीक्षितेऽमुष्मिन् मनोहराकारदर्शनादुक्तं मया—प्रेयसि मयूरिके शङ्खाङ्कितकरः सत्यमयं मुरारिः, अनया च—किमङ्ग मुह्यसे लक्षणवता रेखाशङ्खेन मदनादन्यस्य कस्येयमीदृशी रूपसंपदिति स्वपक्षसमर्थनेन कृतपणाभ्यामन्योन्यमावाभ्यां निर्णेतुमयमिहानीतस्तत्खलु निर्णीयतां क एष इति ब्रुवत्येव मयूरके, कौतुकसमुत्सुका ननु तारावलि नूनमहमावेदयामि योऽयमिति झटित्याच्छिद्य मम करतलादुदयसुन्दरीतमालोकयाञ्चकार ।

तत्र चालोकनेन झगिति शृङ्गारपल्लवलतायां तस्यामनङ्गधनुर्लतोड्डीनः पपात विसरः शिलीमुखानां, शिलीमुखपटलपातादिव सर्वाङ्गमुत्पन्नवान्कम्पः, प्रकम्पचलनादिव व्यगलदाजलबिन्दुकायः कुसुमसन्दोहः, कुसुमभरनिर्भर-भ्रंशादिवाजृम्भत रोमाञ्चकेसरसञ्चः स्वेदोदकच्छद्मा मधुरसप्लवः । क्षणेन च तस्याः सरभसं हृदि प्रविशतो रागस्य दत्तमार्गतया झगित्यपसृतेव पुरस्तादा-कम्प्रकुचशिखरतरलिता बभूव तिरश्चीना हारयष्टिः, झगित्येकहेलयैव प्रविष्टं रागमालोक्य मानसात्परपुरुषसामीप्यद्वेषिणी कुलपालिकेव निःसृत्य गतवती व्रीडा, उज्झितं शून्यमास्पदमिति पृष्ठतो रक्षक इवाध्यतिष्ठदुन्मादः, प्रविश्या-न्तर्मनसि सन्धुक्षतो मान्मथं वह्निमुन्मादस्य परुषफूत्कारपवनदण्डा इव नवो-ष्णप्रसूतयः सततं निःसर्तुमारभन्त निश्वासाः, प्रचण्डदवथुदावानलज्वालिनि सरलनिश्वासारण्यसङ्कटे मुखकमलपरिमलोपलोभादन्धीभूय निपतितं प्लुष्य-माणमलीनां दूरमाचक्रन्द वृन्दम्, इन्दिन्दिराक्रन्दकोलाहलनिवेदितेन मदनहु-तभुजा लग्नप्रदीपनकादन्तःकरणमन्दिराद्दाहभीतमिव निर्जगाम धैर्यम्, धैर्या-नुमार्गमसमरोमाञ्चसूचिकाग्रभेदैरुद्भूतगुरुव्यथानीव स्वेदवारिप्लुतानि प्रणश्य ययुः कपोलयोः पत्रहंसमिथुनानि ।

किञ्च—

मनस्तदीयं पुरुषापरागव्रतेन सन्त्यक्तमिवाङ्गजन्मा ।
हर्षाज्झगित्युज्झितलिङ्गभेदभीतिर्निशातैरिषुभिर्बिभेद ॥

ततश्च—

तद्दृष्टिरिष्टार्थदरिद्रतोरुक्षुधेव रङ्कत्वमनुप्रयाता ।
आस्वादयन्ती सुचिरादवाप्य रूपामृतं तत्र न तृप्तिमेति ॥

अथाहमपि तथाऽवलोक्य ताम्, अहो चिरादेतदालेख्यस्थानमासाद्य लब्धवानमुष्याश्चेतसि लक्ष्यमिक्षुकोदण्डवाही मकरकेतुः, किन्तु त्रिदिवसद्म-नामवनिवासिनामुरगलोकवर्त्तिनां वा यूनामन्यतमः कोऽयमित्यजानन्ती निर-न्वयलाभशालिनोऽस्य चित्रस्यापि दर्शनेन यदेवमङ्गीकृता मन्मथेन, प्लाविता शृङ्गाररसेन, विधुरिता हृदयेन, समुज्झिता सुदूरमिन्द्रियैः, अवष्टब्धा प्रसभमव-शतया, वशीकृता सपदि विस्मयेन, समालिङ्गिता गाढमुत्कण्ठया, तन्नजाने कथ-मियं भविष्यति, कियच्चिरमस्मान्क्लेशयिष्यति, कीदृशी परिणतिरिह सम्पत्स्यते, किमनुचिन्तयिष्यति माता, कीदृशं कृत्वा मंस्यते जनकः, किमालोचयिष्यन्ति

गुरवः, परिजनश्च किं वक्ष्यति, भवतु वा प्रमाणमिह पुरातनं कर्म, तदायत्ता हि गतयः कार्याणाम्, अपौरुषेषु विधिव्यापारेषु यद्यथा निष्पत्स्यते तत्तथैव ज्ञातव्यमिति विनिश्चित्य कालोचितमब्रुवम्—

देवि ! निश्चितं नाभिकमलकौस्तुभादिलक्षणविसंवादान्नैष भगवानुपेन्द्रः, नापि च मकरेक्षुचापपरिकराभिज्ञानशून्यतया देवो मनोभवः, कश्चिदन्य एवायमवैमि देव्या मतेन, तत्खलु वृथीभूतमनयोरपि पणेन विसृज्यतामिदं किन्नरद्वन्द्वकम्। यदि च प्रत्यक्षालेख्यवार्त्ताभिरुपलब्धाशेषसुरसिद्धविद्याधरोरगनरेशरूपस्वरूपं हृदयमपूर्वाकारमेनमेव बोद्धुमाकांक्षति तदुत्थीयतामितः, सावकाशं प्रविश्यतामन्तः, तत्र च रहसि निराकुलीभूतेन चक्षुषा चेतसा च तावन्निरूपयतु देवी, यावज्जानाति योऽयमिति। अत्र तु झगित्यज्ञायमान एव कोऽपि कथञ्चिदागतस्तवेत्थं कम्पमानाः पृथुलपटभराक्रमणेन नलिनदलशिखरसुकुमाराः कराङ्गुलीः ग्लायमानं च निश्चलासनपरिग्रहश्रमजलेन प्रयासनिस्सहं शरीरमालोकयति कुलवृद्धस्तदेतदवधारयन्नङ्गपरिक्लेशनस्खलितं नितान्तमुत्कुप्यति सखीभ्य इति मया प्रोक्ते देवी नियतमेवसुपरचितालाप(व)क्रिमप्रपञ्चया लक्षिताऽहमनया धूर्तयेति सस्मितमतिस्तोकमपाङ्गोत्सङ्गसञ्चारतरलिताक्षिविभागमवलोकनेन हृदयं निवेद्य दत्वा च मत्करे तं पटं विसर्जितपरिजना समुत्तस्थौ।

उत्थाय च प्रविश्यान्तरध्यासिता मरालतूलकोमलं तल्पमादाय भूयोऽपि मत्करतलात्पटमवहितीकृत्य मां कृतादरमपृच्छत्—वयस्ये तारावलि ! जानासि क एष दृष्टः कुतश्चिदन्यत्र प्रत्यक्षमालेख्येन वा, त्वया हि बहुशश्चित्रेण वर्त्तिता दृष्टाश्च त्रिभुवनविवरवर्त्तिनो युवानः, तेषां मध्ये कश्चिदमुना रूपेण संवित्तिमेति भवत्या हृदयस्य, कथमसौ ज्ञातव्यः, कथञ्चान्वेषणीयो विसङ्कटाभोगदुर्विगाहेऽत्र त्रिभुवने, कथं किल दृष्टिविषयमेष्यति, कन्दर्पलुब्धकश्चायं दुरात्मा सुहृदमिमां दीपहरिणीमिव मूर्त्तिमुपदर्श्य मे झगित्याजहार कृष्णसारं लोचनद्वन्द्वम्, अविध्यच्च प्रचलरूपं मानसम्, इदानीं कथय किमेवंगते प्रतिविधेयमिति प्रोक्ताऽहमहो न नूनमवश्यदर्शनवचसामन्यदाश्वासनमसुष्यास्तत्तथैव स्थिरयामि विधुरितामनङ्गेन स्वामिनीमिति प्रत्यवोचम्—

देवि ! स्थिरीभव, धीमतां किमनूह्यमन्तःकरणस्य, किमगम्यं मतीनां, किमसाध्यमध्यवसायस्य च, किन्तु त्वमेवमशरीरिणाऽपि मन्मथहतकेनाभिभू-

यमाना मा तिष्ठ, भव प्रगाढहृदया नूनमेतद्दर्शनविनिश्चयेनेति प्रबोधिता मयाऽसौ सहेलस्मितमनीश्वराऽस्मि प्रियसखि मनोवृत्तेः, अन्वेषणे च पुनरस्य भवती प्रमाणमित्युक्त्वा दीर्घं च निःश्वस्य तूष्णीमकरोत्। ततः प्रभृति च तस्यां मनःप्रस्खलितेनेव विशृङ्खलायते मन्मथग्रहः, स्मरशरनिकरनिकृत्त्यमानेव तनूयते तनुः, रनवरतनेत्रवारिधाराभिरिवोपचीयते रणरणकरसः, स्वप्नसंवृत्तसकलतद्दर्शनादिवृत्तान्तवार्ता एव जल्पनं, चित्रपटनिरूपणमेव व्यापारः, प्रसरदाशाविनोदिन्यो मनःप्रवृत्तय एव सख्यः, तत्सङ्गमनोरथा एव लीलोपकरणानि, कुसुमशरविकारा एव क्रीडितम्, अनङ्गदहनपीडोपशान्तिसज्जितः प्रचुरजलार्द्रोपलेप एव विभ्रमविलेपनम्, स्वेदहरकर्पूरविरचनोपचार एव पत्रवल्लीविलासः, सरसबिसप्रवालवलयादिविन्यास एव भूषणानि, कमलकैरवोपयोगप्रकार एव कुसुमस्रजः, कदलीदलव्यजनवायुरेवनेपथ्यम्।

किञ्च—

अनङ्गसन्तापदशामहापथे
समुद्यता गन्तुमनिन्दितोदरी।
अतः करन्यस्तमृणालकङ्कण-
च्छलेन शाङ्खं वलयं बभार सा॥

अपि च—

तस्या विशुद्धहृदयाहतिपातकेन
लूताकृमित्वमगमद्ध्रुवमङ्गजन्मा।
शैत्यावलग्नबिससूत्रमिषादमुष्य-
त्तेनैष तत्र विचरन्नवतन्तुजालम्॥

किं बहुना—

लावण्यवारिसरसि प्रसभं तदङ्गे
वङ्गन्ननङ्गदवथुर्द्विरदायते स्म।
तेन स्फुरन्त्युपरि सन्त्रुटितावकीर्ण-
राजीविनीदलमृणालसरोरुहाणि॥

किन्त्वेतदेवालम्बनं प्राणितस्य; यदसौ मदनरसविमोहिता त्वन्मयेन चेतसा सर्वमपि स्पर्शं त्वदालिङ्गनमाशङ्कते, सर्वमपि दृश्यं त्वदाकारपरिणतं पश्यति, सर्वमपि जल्पितं त्वत्कथामयमुपक्रामति, सर्वमपि ध्वनिं त्वदालाप-

वाणीधिया शृणोति, एवमसौ मन्मथविजृम्भितेन कक्षीकृता सन्धीरणेन निमित्तवन्धेन शकुनलाभैर्दृढीकरणेन समन्तादुपश्रुतिभिरनुवासरं विनोद्यमाना मया मयैव कृत्वा चित्रोपदर्शनेन जानीथ कोऽयमिति प्रतिपान्थं प्रतिचित्रकरं प्रतिपुराणलोकमापृच्छयन्ती कियन्तं कालमस्थात् ।

अथासौ तथैव तिष्ठन्ती कदाचिदेकस्मिन्नहन्येकहेलयैव परमस्ति भगवतो हाटकेश्वरस्य पूजकः पातालगणो नाम वृद्धस्तपस्वी, तेन च तं चित्रगतं युवानमालोक्य प्रोक्ता भुजङ्गतापसेन, पुत्रि ! चैत्रिकापर्वणि देवस्य विशेषपूजाकृतेऽमर्त्यलोकाद्ब्रह्मकमलान्यादाय सुदूरमतिक्रम्य भूमण्डलाभोगमागच्छता मया प्रसारिणीमशोकशाखिनश्छायामधिष्ठितो दृष्टोऽयमेकत्र कुत्रापि परिसरे भूधरस्य, किन्तु वृद्धत्वादकौतुकेन प्रस्तुताध्वलङ्घनैकहृदयेन किमङ्ग कश्चन मृगयागतः क्षोणीपतिरुत स्वैरप्रचारिणामुत्तमो विद्याधराणामाहोस्वित्कुतूहलादवतीर्णो मेदिनीमन्यतमः सुराणां न ज्ञातः कोऽप्यसाविति । निर्गते तस्मिन् झटित्युत्कण्ठावेशपरवशा मदनशरघातमूर्च्छितेन चेतसा ज्ञातमिव, वीक्षितमिव, समीपदेशस्थमिव, सुप्रापमिव च तं मन्यमाना तत्पुरो निश्चयमकरोत् ।

प्रकारेणाद्य केनापि मेलयत्यस्य चेत्सखी ।
तन्मेलयतु मां नो चेन्निवृत्तिर्जीवितेन मे ॥
इत्युक्त्वा मूर्छितेव शय्यायामपतत् ।

अहं च तेन तस्या विनिश्चयेन हा हा ! किमेतदप्रतिसमाधेयमचिन्त्याध्यवसायमपौरुषारम्भमचिरोपसाध्यमध्यवसितं देव्या, तदत्र किं करोमि, क गच्छामि, कमुपायमासूत्रयामि, कतमं देवमभ्यर्थयामीति मुहूर्त्तमतिविक्लवीभूतमात्मानमात्मनैव प्रबोध्य यत्खलु बुद्धेर्विषयमायाति तत्करोमि, परतस्तु विधिर्विधास्यतीति निश्चित्य मतिसखेन चेतसा सन्ततमुपायशतानि चिन्तयन्ती तेन सह तस्याः सङ्घटनेन कालमेकं तन्नियमनिर्वाहोपायमासाद्य निर्गत्य च तथा कृत्वा त्वरितमागतवती । आगत्य च देवि पूर्णा ते प्रतिज्ञा, मिलितासि वल्लभस्य, विलोकय पुरस्तादित्युक्ता मया; सरभसमुन्नम्य वदनाम्बुजं यावदालोकयति तावत्तदालेख्यबिम्बान्तिके योजितान्यपटलिखितं चित्रगतमात्मानमद्राक्षीत् । दृष्टे च तत्र सविलक्षमिव हसित्वा मामुक्तवती । सखि तारावलि किमेतदिति प्रोक्ताऽहमब्रुवम् । देवि केनापि प्रकारेण मेलनीयाऽहमस्येत्या-

दिष्टं देव्या तदस्त्येतस्य प्रत्यक्षवर्त्तिनश्चित्रमूर्त्तेः केनापि प्रकारेणेति । जानासि तदा तेन विद्धविजयनाम्ना चित्रकरेण शिल्पकलाकौशलमात्मनो दर्शयता रतिरूपस्पर्धया यत्र त्वदीया मूर्त्तिरालिखिता तं पटमिहानुसन्धाय चित्रप्रकारेण मेलिता मया देवी । पूरिता च प्रतिज्ञा । किन्तु विज्ञापयामि स्वामिनि ! प्रभूताध्यवसायसाध्ये वस्तुनि न देव्या पुनरप्येवमनालोच्य कर्तव्यम् । अहमवश्यं तथा यतिष्ये यथा पूर्यन्त एव मनोरथा इति । नियन्तितस्वैरनियमा देवी, भवतु तावदेकवारमसावपि सुतरामुपकारिणी बभूव मे प्रतिज्ञा यच्चित्रेणापि मिलितमेतस्यात्मानमालोकयन्ती धारयिष्यामि जीवितमित्युदीर्य तथैव तं पटं प्राणितमिवान्तिकादनुत्सारयन्ती दिनान्यतिवाहयामास ।

अथैवमनङ्गोद्दाहदुःसहमवस्थान्तरमनुभवन्त्यास्तस्याः प्रकाममञ्जनच्छविभिर्घनयन् हृदयान्धकारमम्भोधरैः, अनेकवर्णभरेण विचित्रयन् रणरणकमिन्द्रचापेन, शङ्खदलपाण्डुराभिः प्रसारयन्कपोलयोः पाण्डिमानं बलाकाभिः, दहनदारुणया वर्धयन्मन्मथोत्तापं विद्युता, मधुरेण दीर्घयन्पञ्चमसखं हुङ्कारमविरलमयूरकेकारवेण, मरकतमणिमरीचिशिखरसुन्दरसुकुमारहरिततृणकलापशाद्वलितभूतलो धवलनवजलधिपूरितानेकपल्वलोपशाली शीतलितवासरः सुदूरभरितनीराशयोऽपि शोषितवियोगिनीमानसो जगज्जीवनैकहेतुरपि पथिकान्तकारी विवेश मदनमित्रमम्भोमुचां कालः ।

यत्र—

भूमिः कोमलसान्द्रकन्दलवती मेघावनद्धं नभो
नृत्यन्मत्तमयूरमन्द्रमधुरध्वानोपरुद्धा दिशः ।
वाताश्च प्रसरत्कदम्बकुसुमस्पर्शप्रसन्ना वने
वान्ति स्वैरमनङ्गरागजलधिं कल्लोलयन्तो हृदि ॥

तत्रैकस्मिन्नहन्येकहेलयैवागत्य मातुः प्रतीहारी शेखरिका जगाद— राजपुत्रि त्वरितमभिमुखोत्थानप्रश्रयेण विधेहि स्वागतम्, आयाति ते जननीस्वामिनी विजयरेखा चलिता च । यत्किल कुमारभावे स्थितया देव्या श्रिया वरं जलशायितानुषङ्गदृष्टं वैकुण्ठमभिप्रेत्य तदर्थसिद्धये कमपि व्याजमालम्ब्य पित्रा रत्नाकरेण कृत्वा दुर्गमागाधविभ्रमाणामन्तरेकत्र पाथसां पाथसामल्पकेनापि बिन्दुना देवतानुभावाद्दूरतोऽप्यस्पृश्यमानमसमशिल्पकल्पनाभिरामनिर्माणं मणिमयमायतनं कारितमास्ते । तत्र चान्तःप्रतिष्ठितोऽस्ति देवश्चन्द्रकेतुनामा

महेश्वरः । स च सम्यगाराधितो भगवानवश्यमभ्युद्गताभिलाषिण्याः श्रिय इव पूरयति हृदयवाञ्छितानि युवतीनामित्युपास्यत एव सकलभुवनवर्तिनीभिः सर्वदाऽपि रमणीभिः । अद्य पुनः पयोदकालप्रणयिनि पवित्रकोत्सवे महती यात्रा । तत्रासौ भवतीमादाय यास्यति । अतः कन्यालङ्करणरत्नावलिप्रगुणीभव, उत्तिष्ठ सत्वरम्, पश्य देवमखिलविश्वाभिवाञ्छितकरं शङ्करम्, येन ते प्रसन्नो भगवान्वितरत्यभीष्टं मानसस्येति शेखरिकया प्रोक्ते सप्रतोषमिव मत्कर्णे स्थित्वा ननु वयस्ये तारावलि साध्वनुकूलसेवा अम्बया चिन्तिताऽस्मि, यदि स एव देवो घटयत्यभीष्टं हृदयस्य तत्तदहं तमेव किं न प्रतिदिवसमाराधयामि येन तत्प्रसादादेष प्रतिबिम्बाधिष्ठितपटो युवा प्राप्यत इति निभृतमभिधाय न यावत्सखीपरिवारपरिगता सरभसमुत्तिष्ठति राजकन्या तावद्द्वार एवाऽऽजगाम कुब्जवामनकिरातकञ्चुकिपुरन्ध्रकाप्रायपरिजना देवी विजयरेखा ।

तत एव कृतप्रणतिमालिङ्गनादङ्कमिलितामेव दुहितरमादाय तया सार्द्धमुच्चलिता तमासाद्य समुद्रगर्भोपकोणवलयानुगामिनमध्वानं प्रविष्टा सागरस्यान्तरग्रे च ददर्श तम् । प्राप्ता च भगवतः प्रासादमथ यथोपरूढया प्रक्रियया तस्यातिमहतो मणिप्राकारवलयितस्य विमलघनरत्नसन्तानरचनारोचिष्मतो मध्ये सुरालयस्य प्रतिष्ठितमखिलभुवनान्तरेभ्यो युगपदागताभिर्भूयसीभिः पुरन्ध्रिभिरहमहमिकाक्षेपसङ्कटेन पूज्यमानं भगवन्तमम्बिकाकान्तमनेकशः प्रगुणितक्रमैरुपहारैः स्वयमुदयसुन्दर्याश्च हस्तेनाभ्यर्च्य नमस्कृत्य तन्निवासिनीं पारायणीति नाम्ना तपस्विनीमादाय तदाशिषं सह सुतया स्वामिनी विजयरेखा तथैव यथागतेन वर्त्मना निवासमाजगाम । राजपुत्रिकाऽप्युदयसुन्दरी ततो दिनादारभ्य प्रतिदिवसं न यावदसावुदीक्षितो देवस्तावन्नाहारमादत्त इत्युपासितुं चन्द्रकेतुमारेभे ।

अन्येद्युरसौ तथैव नित्ययात्रोपरूढक्रमेण सकलसखीसमापर्यञ्चिताकूतिरुत्साहतरलेन चेतसा जगाम । तस्मिन्नवाप्य च तस्याङ्गणकवेदिकामायतनस्य तत एव पुष्पोच्चयकृते सह सर्वाभिरपि सखीभिरभ्यर्णवर्त्तिनीं पुष्पवाटिकामविशत् । सारङ्गिका नाम च तेन चित्रपटेन सनाथपाणिरुच्छत्रवाहिनी गत्वा सुरालयस्यान्तरसङ्गतजनाप्रचारसुस्थितं स्थानमिति नित्यप्रवृत्तया स्थित्या क्वचित्कोणैकदेशे सह चित्रपटेनातपत्रमुन्मुच्य त्वरितमागत्यास्माकं मिलित-

वती, लग्नाः स्मः सहजहर्षोपशालिना केलिक्रमेण पुष्पाण्यवचेतुम्। अत्रान्तरे च क्षणे कियत्यपि सहसैव परमुदग्रक्रोधदुर्द्धराकारसंवृत्तिः सम्भूरितिरस्कारमायतनवासिनी सा नाम तापसी पारायणी रे रे शुक्तिभङ्गदुष्कृतादितः शिखात्वमागतेन त्वममुना पटेन सशिखः शुको भवेति शापं कस्यापि वितरन्ती चकार कोलाहलम्। तस्य कोलाहलस्यान्तः पटशब्दश्रवणादुत्पन्नशङ्का किं पटस्य तस्येति झटित्युन्मुक्तकुसुमावचयकेलिरुदयसुन्दरी निर्गत्य पुष्पावचयनात्सह मयैव प्रधाव्य ससम्भ्रमं याति तस्मिन्नायतनक्रोडमण्डपे यावत्तावदग्रे निजेन तेन हृदयविश्रामशालिना पटेन सनाथहस्तं तथा शसमेकं पुरुषमद्राक्षीत्।

दृष्ट्वा च हा हा किमेतदन्धकारिमाराधयन्त्याः संवृत्तमत्राद्य मे तावदास्तामपरो विशेषश्चित्रेणापि दर्शनमपाकृतं भगवता शम्भुनेति हृदये नितान्तमुत्तम्य कृपालुतया तपस्विनीमभ्यर्थ्य च भूयः स्वप्रकृतिलाभेन तमनुग्राहयाञ्चकार। विरतया च भक्त्या किमप्येवमेवाभ्यर्च्य भगवन्तं तं चन्द्रकेतुम्, अनादरेण कृतनमस्कारा च तस्याम् तपस्विन्यां, मृणालीव सलिलसेकेन, भुवनश्रीरिव..........सेन, कमलिनीव दिवसराजेन, कुमुदिनीव चन्द्रेण, रजनिरिव चन्द्रातपेन, विप्रयुक्ता पटेन म्लानिमायाता, निर्विण्णेव जीवितेनाप्यवनतमुखी, त्वरितमेव निर्गत्य शून्यीभूतेन मनसा सततसञ्चारपरिचितमपि मार्गं पदे पदे स्मार्यमाणा मया भवनमागतवती। विसर्जिताशेषपरिजना च मामप्यसम्भावयन्ती भवनान्तः प्रविश्य तल्पतलं भेजे। दिनच्छेदाञ्चले च बहुशः प्रबोध्यमाना मया कथंकथमपि हठादवश्यकरणीयमाह्निकं कर्म कारिता। ततःप्रभृति चासौ समुद्यतादित्यमण्डलं दग्धुमङ्कान्यागतं गृहीताङ्गारपुञ्जमिव दिवसं गणयन्ती, रात्रिमप्युदञ्चितेन चन्द्रमसा दृषद्गोलकेनेव स्फोटयितुं हृदयमुद्यतां मन्यमाना, कालमतिवाहितवती।

अन्यदा तु निवृत्तायां प्रावृषि समुद्भूते च बन्धुजीवप्रबोधिनि शरदागमे सरिदिव कृशीभूता, मयूरजातिरिव क्षीयमाणस्वना, वनश्रीरिव पाण्डिमानमादधाना, तिग्मांशुमूर्त्तिरिवाभ्यधिकमुद्वहन्ती च तापमुदयसुन्दरी भूरिभिरपि शिशिरोपचारैरसाध्यया कुसुमशरकृशानुप्लोषपीडया परितः क्लाम्यन्ती विशदशशिकरविसरविस्तारशीतलामतीव्रकैरववनसमीरगर्भिणीं विभावरीमवाप्य पृथुतरसरोजिनीपत्रातपत्रकान्तरितगगने सौधशिरसि प्रसुप्ता प्रातरुत्थितानां परमेकहेलयैव न दृश्यत एवेति सम्पन्नम्। अथाहमुत्थाय सहसैव नितान्तमा-

कुलीभूतहृदया सर्वतस्तत्र सौधसद्मन्यधस्तादुपरि पार्श्वतोऽभ्यन्तरेषु च निरीक्ष्य गवेषयित्वा च व्याजेन मातुरप्यन्तिके निरूप्य च सम्यक्प्रचारस्थानेषु क्रीडास्पदेषु च तामपश्यन्ती ननु सर्वदैव मद्विरहिता या किल नैकमप्येवं कुत्रापि चलति साऽद्य मामपहाय क्व गता राजपुत्री, किमङ्ग बहिःशयनेनामुना दृष्टिपथमुपेता त्रिभुवनमनोहरेति केनाप्यपहृता नभश्चरेण, किमत्यन्तमद्भुतसमृद्धिना सौन्दर्येण सारेयमित्यात्मनो रूपप्रसिद्ध्यपगमक्षयादपह्नवार्थमपसारिता विद्याधरीभिः, किमुत यदभ्यर्थनाभयेन विहाय पातालमत्र मुक्ता तेनाद्य कथञ्चन ज्ञाता सती निभृतमाकृष्य नीता भुजङ्गराजेन, किम्वहो कष्टमस्मत्सुतेयमेवं ग्लानिमापन्नेति लक्ष्मीभ्रमात्स्वसैव प्रापिता निजं निलयमम्भसां नाथेन, किमनेकशो हृदयसङ्कल्पैः कुतोऽपि तं जनमभीष्टं व्रजन्तमालोक्य मदनमोहेन पृष्ठतो लग्ना दूरीबभूव, किन्तु स्वप्नसंवृत्तसङ्गमव्यतिकरे कृतागसमग्रतः पलायमानं तमतिप्रणयकोपा झगित्युत्थाय प्रत्यक्षमिवाहन्तुमनुसरन्ती कुत्रचिज्जगाम, किमनङ्गदहनपीडिता जलाशये क्वचिदात्मानमक्षिपत्, किन्नु समुद्विग्ना प्राणितेन क्वापि वृक्षशाखायामालम्ब्यमानपाशेन सत्वरमसूनुपसंहृतवती।

अपि च—

किं वक्त्रद्युतिमत्सरैकरिपुणा चन्द्रेण दूरीकृता
नक्षत्रैर्भृशरम्यनिर्मलरदज्योत्स्नार्थिभिः किं हृता।
यामिन्या घनकेशपाशतिमिरं प्रेम्णा समालिङ्ग्य किं
नीता हन्त बहिः स्थिताऽद्य सुचिरादासाद्य तुच्छोदरी ॥

अथवा—

सा नूनमिन्दुकिरणाञ्चलबोधितेन
भस्मीकृता प्रबलमारमहानलेन।
उत्क्षिप्य चाथ कुमुदाकरमारुतेन
नीता भविष्यति सुदूरमितो मृगाक्षी ॥

न तावदिह सर्वतोऽपि वीक्षिता दृश्यते, न च विकल्पनिपुणेषु लोकेषु कश्चिदपि पार्यते प्रष्टुम्, अग्रे च पित्रोः कथमहमव्यवहितप्रसादपात्रं प्रियसखी तदीया मुखं धारयामि, कथं नाद्य कुतोऽप्युदयसुन्दरी दृश्यत इतीमां वाचमुच्चारयामि, कथमेतदाकर्णनेन सपदि म्लानिमापन्नां तयोर्मुखश्रियं पश्यामि, कथं च क्षणं स्वामिन्या विजयरेखायाःपरिदेवितविदर्भिता गिरः शृण्वन्ती शक्नोमि जीवितुम्, ततस्तु या नाम गतिरुदयसुन्दर्याः साऽद्य

ममापि, किन्तु सख्याः कालिन्द्या मुखेन विदितवृत्तान्तां विधाय स्वामिनीं विजयरेखामद्यतनमहः प्रच्छन्नेव किमत्र निष्पद्यत इति कचिदिहैव गमयामि, परतस्तु यथोचितमाचरिष्यामीति निश्चित्य तथाकृत्वा गत्वा च नगरनिर्गमोद्देशे खण्डमेकं चण्डीशभवनमध्यातिष्ठम् । अनन्तरं च कालिन्दिकानिवेदिते तस्मिन्नुत्तिष्ठति प्रवादे प्रसरदाकूतविकलेन स्वामिना शिखण्डतिलकेन निरूपितैस्समन्तादधिगृहमधिसुरालयमधिप्रपासत्रमधिकरितुरगशालमधिकर्मविद्यादिस्थानमधिवनमधिजलाशयमितस्ततः प्रतिपथमतिसत्वरं प्रधावद्भिरन्वेषकजनैरन्तर्व्याकुलीभूतेव राजधान्यपि मुहूर्तमेकं बभूव ।

ततश्च—

अबाध्यमानवादित्रमगीतमजनारवम् ।
रङ्गस्थलमिवासन्नपात्रागममभूत्पुरम् ॥

अपि च—

नादत्ते कश्चिदाहारं नेपथ्यं च नृपालये ।
तया श्रियेव निर्मुक्ते परं दौस्थ्यमगाज्जनः ॥

अथ वृत्ते च तस्मिन्नहनि, विफलीभूय निवृत्तेष्वासन्नगवेषकेषु, तत्कालमेकीभूय मन्त्रिणामवसरोचिताभिः प्रतिपादयन्तीभिर्विचित्रसाराणि संसारविलसितानि, समर्थयन्तीभिर्व्यवसायसाध्यानि वाञ्छितानि, निदर्शयन्तीभिः प्रज्ञानुबन्धसिद्धानि प्रयोजनानि, प्रमाणं नयन्तीभिरनाप्यप्रापिकाः पुरुषकारशक्तीः, कथयन्तीभिरसाध्यसाधिकां बुद्धिम्, ग्राहयन्तीभिर्दुर्दर्शोद्दर्शीनि हृदयस्थैर्याणि, दिशन्तीभिरगम्यगामिनो मन्त्रान्, अविरतं हितोपशालिनीभिरुक्तिभिरुत्सार्यमाणनिर्वेदो राजा निरूप्य देवतासु पूजोपयाचितकसूचनाय कुलवृद्धान्, निवेश्य निमित्तविलोकनाय तद्विदः, नियुज्य शाकुनज्ञानाय शाकुनिकान्, आदिश्य वैदेशिकप्रश्नाय परिजनम्, सञ्चार्य विरोधिवसतिषु प्रणिधीन्, प्रस्थाप्य च मित्रस्थानेषु दूतान्, अशेषतस्त्रिभुवनेऽप्यन्वेषणाय मदीयमन्तिकोपविष्टं पितरमब्रवीत्—भोः सैन्याधिनायकरत्नमौले प्रेषय तूर्णं कति नाम सन्ति सेनान्तः सकलभुवनत्रयप्रचारिणः पन्नगभटा यैः कृत्वा सर्वतोऽप्यन्विष्यतेऽस्माकमनन्यैकजीवितं कुमारीति पुत्रिकावियोगविधुरेण स्वामिनाऽभिहितः पिता मे दर्शितोत्साहनिर्भरं प्रत्युवाच—

देव दुर्गमाणि गमयितुमुदग्रशक्तयो, दुष्प्रवेशेषु प्रवेशपटवः, पाटवपराश्च

दुर्लङ्घ्योल्लङ्घनपदेषु, येषां न किञ्चित्सहजप्रभावादप्रचारं विषमविश्रान्तः, ते हि मनोवेगिनः सन्तीह कियन्तोऽप्यवन्तकुलजातयः, कियन्तो भुवनराजस्य वासुकेर्वंशजाः, तक्षकान्वयसम्भवाः कियन्तः, कियन्तश्च कर्कोटगोत्रिणः, कुलिकसन्ततिभवाः कियन्तोऽपि, कियन्तोऽपि देव युष्माकमादिपूरुषस्य महात्मनः शङ्खपालस्य कुलादुद्भूताः, कियन्तो हि महापद्मसन्तानतः प्रसूताः, पद्मगोत्राच्च लब्धसम्भूतयः कियन्तोप्येवमष्टसु क्रमेण चतुर्वर्णतया लब्धप्रसिद्धिषु प्रधानपन्नगकुलेषु जातास्तावन्तः स्वामिन् भविष्यन्ति भुजङ्गमभटाः, ये सकलमाकोणरन्ध्रावटं विगाह्य विश्वमचिराद्दर्शोपयन्ति पुत्रिकोपलम्भवार्तया स्वामिनमित्येवभिधाय त्वरितमाहूय च सर्वानादेशलाभार्थिनः कृतप्रणतीन् कुम्भीनसमहाभटानग्रे चकार।

राजाऽपि तानेकैकशो नामग्रहणसत्कारेण सम्भाव्य साभ्यर्थनमाख्याय पुत्रिकान्वेषणप्रेषणमर्पयित्वा च प्रत्येकमुदयसुन्दरीरूपवाहिनश्चित्रपटान् सप्रदेशोपदेशमादिदेश—भोः श्रूयतां तावदादौ सप्तधा प्रभेदवति पाताललोके सप्तै(व) फणावलिप्रभृतयो भुजङ्गचमूपतयः! प्रयात यूयम्; उपरि च भूलोकमधिकृत्य जम्बूद्वीपे गुञ्जाक्षनामा कदम्बमहाद्रुमेण सुन्दरे मन्दरगिरौ, उत्पलो नाम जंबुद्रुमेण केतुमति गन्धमादने, दीपकस्त्वं पिप्पलेन तरुणा शोभावति विपुलाख्ये महीभृति, असावपि कालिन्दको न्यग्रोधतरुच्छायाश्यामलितसानौ सुपार्श्वसानुमत्येवमेते(षु) चतुर्षु महानगेषु व्रजन्तु चत्वारः सु(भटा); एतेषु त्रिष्वपि निषधे तमालकः, कमलो हेमकूटे, कुवलयो नाम च हिमाद्राविति गच्छन्तु गिरिषु शौण्डीराः; त्रिषु चापरेषु पद्मकः शृङ्गवति, श्वेताचले पिङ्गलः, नीलद्युर्नीलगिरावित्यमी भूमीधरेषु त्रयो यान्तु; तेषु पुनरष्टसु महेन्द्रे मलयप्रभृति सह्ये शक्तिमति वृक्षशैले विन्ध्यगिरौ पारियात्रे कन्याचले चेति कुलपर्वतेषु सहापरैः पुष्करादिभिः सप्तभिरेष वीरो महाफलः प्रचरतु; सञ्चरन्तु चान्ये चैत्ररथे शिखण्डकः, ताराक्षो नन्दने, वैभ्राजवने विशालो, धृतिसंज्ञिके सितादरश्चेति चतुर्षु महावनेष्वमी चत्वारश्च; अपरे तावदरुणोदनामन्येकः, द्वितीयश्च मानसे, सितोदे तृतीयः, चतुर्थो महाभद्रे चेति जलास्पदचतुष्टयेऽस्मिन्नेते फणाङ्कुशप्रभृतयो विचरन्तु; भारते हि क्षेत्रे दम्भोलिरेवैकः प्रयातु; यात्विलावृते रमसिकेतुरेव; परिशिष्टेष्वन्यत्र लङ्कालकादिनगरेषु, श्रीशैलकैलासादिभूधरेषु, जाह्नवीरेवादितटिनीषु, अवटेषु सर्वेषु, जलाशये चातल्पमर्यादमखिलेष्विरयादिपद्याप्रचारानास्पदेषु कमलकण्ठनामा

प्रधानो भूलोकवर्तिकवरूथिन्याः स्वयमुचितक्रमेण सञ्चरन्नेकैकशो भटकोटि-पौरुषान्प्रहेष्यत्येव चरप्रवीरान्; जम्बूद्वीपात्परतः षट्सु महाद्वीपेषु दुर्मदः शाकद्वीपे, कुशे कालाञ्जनः, चक्राह्वः क्रौञ्चे, सरलः शाल्मलीद्वीपे, गोमेदनामन्यासीमुखः, पुष्करे च तापिच्छकोऽयमिति षडमी महात्मानः सैन्यैर्भ्रमन्तु; सेनापतय एतेऽप्यालवणसागरात् स्वादूदकसमुद्रावधेः सप्तसु पयोराशिषु ससैन्य गमेयदुणुप्रभृतयः प्रसर्पन्तु सर्पशौण्डीराः; तथाऽन्येपि हृदयवेगनाम्ना चरप्रवरेणाधिष्ठिता दिक्पालनगरीष्वष्टौ चाष्टासु पर्यटन्तु भटाः; तस्माच्च स्वर्लोकमासाद्य त्रिदशराजधानीषु सिद्धनगरीषु विद्याधरपुरेष्वन्येषु चाब्रह्मलोकमर्यादमसुमतामास्पदेषु सुमेरुशैलावगाहनपुरस्सरमन्वेषयतु परिगतः सप्तभिरनीकिनीभिरिन्द्रनीलनामा च प्रभुरसौ; इत्येवमखिलमापुराणकमठाद्ब्रह्मलोकावधि ब्रह्माण्डगर्भमवगाह्य ज्ञायतामुदयसुन्दरी क्व वर्तत इति, गम्यतां त्वरितमन्विष्यतां वत्सेत्यादि सादरमभिधाय, भूरिणा प्रसाददानेन सम्मान्य विसर्जितान् भुजङ्गवीरवार्तिकान्प्रेषयामास ।

अहं तु तथा दुःखेन भरिता तदीयां प्रवृत्तिमचिरादेव स्वयमीहमाना जातामात्मनोऽपि गतिं तद्गत्या प्रमाणीकृत्य तथैवानुष्ठातुमन्तःकरण एवाऽऽलोचितवती। ननु का गतिर्भूता भविष्यत्युदयसुन्दर्या यस्यामहं व्रजामि, अथवा तावदपहारानुमानस्यैव पृष्ठे लगामि, ततश्च पुरन्ध्रिकापहारकर्मणि सहजव्यसनिनो भवन्ति सीतापहरणेन पुनः स्फुटप्रतीतयो हि नक्तंचराः, नेदीयसी च सा समुद्रान्तरद्वीपवर्तिनः कन्यावरोधस्य तदीयमास्पदं लङ्का, तत्खलु तत्र पश्यामि पश्चादन्यत्र गवेषणाय यतिष्ये, मा पुनर्भाग्यवशात्तत्रैव गतायाः सरति मे वाञ्छितं हृदयस्य, किं तु ममापि युवजनाभिगम्येनामुना कुमारीरूपेण निर्गत्य च भवनाद्भ्रमन्त्याः कतमं नाम कुशलम् । अतः कृत्रिमैर्भस्मजटावल्कलादिभिस्तापसत्वमाधाय पर्यटामीति चेतसि विनिश्चित्य तथा कृत्वा विमानपदप्रतिष्ठितं च नभःप्रचारसारमतिजवं पादुकाद्वितयमधिरुह्य निर्गताऽस्मि । तस्माद्गता च लङ्कायां दृष्टवती च तत्रास्मि दूराद्रणाध्वरजुषा रामेण परिगृहीतस्य ज्वलतः प्रतापनाम्नो वह्नेरर्चिषामालोकमिव प्रसर्पन्तमभितोऽपि कनकमयाशेषसुरमन्दिरागारप्राकारवतः परिकरस्य रोचिषां कलापम् । अथाहमन्वेषणरसैकहृदया नगरपरिसरादेव तत्खल्वपहृत्यानीतसीतावस्थानपवित्रितभुवा शिंशुपाद्रुमेण प्रसिद्धमधिविष्टा रावणीयमुद्यानमितस्ततो भ्रमन्ती च तस्मिन्नादौ तदेवं बन्दिग्रहगृहीतसीताविलोचनस्रस्तैरजस्रमञ्जनाविलैरश्रुवारिभिर्म-

लिनितया सुतार्तिदुःखातिदाहदग्धयेव पृथिव्या श्यामलितमास्पदं शिंशुपाद्रुमस्य दृष्टवती। दृष्टवती चान्यतो गैरिकरागलोहितमृदा रक्तपातमनुमापयन्तमुत्कुपितहनुमत्करतलचपेटास्फालदलितस्य दशकण्ठसूनोरक्षस्य वधप्रवेशं क्रीडागिरेः परिसरम्। परतोऽपि तस्मान्नातिदूरे दृष्टवती तेनैवाक्षवधास्वादलुब्धेन हनुमता व्यापादितस्य सरक्षकवरूथिनीकस्य जंबुमालिनः पतितास्थिमुकुरोपलक्ष्यमाणतलं वलयमुर्वीरुहाणाम्। पुरस्तात्कियतोऽपि भूविभागस्यान्तरे दृष्टवती च मारुतिनियन्त्रणोत्सृष्टपरुषपाशोरगपरिग्रहोद्गारगरलानलशिखादाहैरनुद्भिन्नतृणविटपिराजिमाजेर्भुवं शक्रजितः। प्रकृतप्रयोजनानुपलम्भखिन्ना च निर्गत्य तस्मादारामतः पदे पदे क्वचित्कथञ्चिदुभयराघवभुजास्त्रधारावकर्तनोच्चलितमौलिवलयानां मेघनादप्रभृतिराक्षसभटानां चलत्पदतलाघातसमतलान्कबन्धताण्डवोद्देशानालोकितवती। दृष्टवती च क्वचिद्दाशरथिकरशराघातविघटितायुषः कुलाद्रिगुरुकलेवरभ्रंशाभिहत्या त्रुटितत्रिकूटगिरिशिखरशकलितशिलाखण्डदन्तुरामन्तभुवं कुम्भकर्णस्य। विशालसीमन्यन्यत्र च प्रदेशे प्रचण्डकलितकुतूहलोत्तालमिलितसुरशिबिरकरविसृष्टाविरलपतितपारिजातकुसुमसमुदयामोदवासितधरातलं वीक्षितं च रामरावणयोराहवस्थानम्। अपि च तमन्तर्दशकण्ठराजाङ्गणोद्देशमालोकितवती।

यस्मात्—

कान्त्या ज्वलन्नरुणपिङ्गलया विशालः
फालाय वर्तुलितदेहदलो हनूमान्।
लङ्कापुरीं कुपितदाशरथिप्रताप-
वह्नेः स्फुलिङ्ग इवोच्चलितो ददाह॥

पर्यन्ते च प्रतिभवनमेकत्र गृहजनेभ्यः कथाभिराकर्णितमतीतस्य चकितमन्दोदरीप्रबोधनपरमुक्त्तवचसो रावणस्य सूक्तं पञ्जरनिवासिना शुकेन पठ्यमानमश्रौषम्।

माभैर्भीरु यदेष राघवबटुर्देवो मुरारिः स्वयं
गोलाङ्गूलभटा इमे च मरुतस्ते दुर्निवाराः किल।
स्वर्बन्दीहठनिग्रहोद्यतभुजादण्डो यदाऽहं तदा
किं नासौ मुरजित्सुरा न किममी येनातिभीता प्रिये॥

ततोऽपि चाग्रे केनापि सुरेष्वसहिष्णुना राक्षसापसदेन दशाननं शोच्यमानमाकर्णितवती।

हा स्वर्नाथशिखोढशासन दशग्रीव प्रभो क्वासि भो
भोः शौण्डीर विना त्वयाऽत्र नगरे हा पश्य यद्वर्तते ।
ये त्वद्द्वारनिषेविणः प्रविशता लोकेन घृष्टाः पदै-
स्ते तेनैव हहा शुभार्थमधुना पूज्यन्त एते सुराः ॥

अन्यतोऽप्येकत्र निर्जनायतनमण्डपस्य गर्भे विश्रान्तिमिलितैर्वैदेशिकनिशाचरैरन्योन्यारब्धवार्तया रावणवधे विधेर्वैपरीत्यमत्यन्तविस्मयात्सनिर्वेदमुद्भाव्यमानमश्रृणवम् ।

सेवितो यैः सुरैर्भूत्वा तैरेव दशकन्धरः ।
हा हतो मर्कटैर्भूत्वा वैपरीत्यमहो विधेः ॥

एवमपरमन्यत्रापीदृग्विधं व्यतिकरमनेकशः स्थाने स्थाने विविधरूपमुपलब्धवती । इत्यादिकं प्रतिप्रदेशमभितो रामरावणीयं वृत्तान्तमुपस्थानमिलितेन सरभसमपूर्वतापसीदर्शनकुतूहलिना पुराणलोकेनाऽऽख्यायमानमवधारयन्ती नगरमाकोणकुहरान्तरालमन्तर्बहिश्च परिभ्रम्य न क्वचित्किञ्चन किंवदन्तीमात्रकमप्युदयसुन्दर्या लभमाना निराशीभूय विमुच्य च सरलं विषादपूत्कारमतिसत्वरं निर्गत्य तस्माल्लङ्कापुरीप्रदेशान्मलयादिगिरीन्द्रकुक्षिषु क्रीडास्पदानि विद्याधरकुमारकाणामुद्दिश्य गन्तुमारब्धवती । तेऽपि भव्ययुवतिरत्नापहारिणः प्रसिद्धास्ततश्च तत्र कुत्राप्यवश्यमसौ भविष्यतीत्याशया व्रजन्ती काप्येकस्मिन्नेकहेलयैव प्रवरगिरितटोत्सङ्गतरुगह्वरस्य गर्भे त्रायतां त्रायतामिति पूत्कुर्वन्तमुपरचितब्राह्मणरूपममुं निशाचरापसदमद्राक्षम् । हा हा ब्राह्मणोऽयमार्त्त इति च बलवत्या करुणया प्रेर्यमाणहृदया समीपमुपसृत्य सादरमपृच्छम्—भो द्विजन्मन् ! केन ते त्राणमुत्पद्यत इत्यसावुक्तः सुदर्शने कथमिदं वच्मि यदि भवत्या किलेत्यावेदितवान् । अथ मयाप्यहो का तर्हि चिन्ता मया चेत्प्रतीकारस्तदावेदय त्वरितं कतमा तवार्तिरवश्यं यदेव ब्रूषे तथेति त्वद्वचः प्रतिकरोमीति प्रतिपन्ने सहर्षमेषोऽब्रवीत्—साधु साधु प्रतिज्ञातमिदानीं कथयाम्यत्र खलु विकसितानेकनवलताविरलपरिमलोन्मादिनि प्रदेशे झटित्यदृष्टशरीरकेणागत्य हतकेनामुना पुष्पशिलीमुखेन बहुशो विद्ध्यमानहृदयं दयावति त्वमेव मां रक्षितुमधीश्वराऽसीति । वज्रपातसमतुलेन तेनास्य वचसा हा धिक् किमापन्नमनङ्गशरपीडितेन दुरात्मना छलिताऽहमेतेन । को हि किल द्विजो भूत्वा तपस्विनि जने स्मरातुरं मनः कुर्वन्नत्यन्तमिदं गर्हितमाचरति तदसौ कृतकमूर्त्तिरग्रजन्मा न साक्षात् । साक्षात्पुनरपरो

विप्रवेषापह्नुतस्वजातिः क्रूरकर्मा कश्चित्। अतः किं करोमि भवतु छलिताऽपि वचश्छलेन छलयाम्येनमिति संप्रधार्य विपाट्य च निजस्यावरणवल्कलस्यैकमञ्चलमहो महानुभाव गृहाण प्रावृणु सर्वाङ्गममुं कवचप्रायमतिप्रगाढपुटं वल्कलपटश्चैवं कृते न केवलमसावेव पुरोवर्तिविटपकुसुमे निविष्टः शिलीमुखो नियतमन्येऽपि काननेऽस्मिन्कुसुमकुटीरवासिनो मधुव्रता न ते लगिष्यन्ति। एष ते पुष्पशिलीमुखेन विध्यमानहृदयस्य मया कृतः परित्रोपायः, पालितं च निजं प्रतिज्ञातं, प्रतिकृतं वचस्त्वदीयं, तथ्यवचना च जाताऽस्मि, यामि संप्रतीत्येवमभिधाय नन्वसौ न ज्ञायते कश्चिदित्थं निराकृतः कोपादन्यदेव किमप्याचरतीत्यन्तराशङ्कितेन मनसा झगित्यपसरणधिया तथैव गगनमुत्पत्य प्रचलिताऽस्मि।

असावप्येवमभिप्रेतविपरीततया निर्व्यूढमवगम्य मद्वचःप्रतिज्ञातमपसृतायां मय्यकस्मादसीमविषमेण क्रोधरंहसा प्रखरफूत्कारपवनाहतो वह्निरिव ज्वलितो नितान्तम् "आः पाषण्डिनि! मृषापाण्डित्यलवदुर्विदग्धे पुष्पशिलीमुख इति पुष्पशरे मनोजन्मनि व्याख्यातव्ये पुष्पे शिलीमुखो भ्रमर इति श्लिष्टार्थव्याख्यायाश्छलेन प्रतार्य मां गन्तुमीहसे, क्व यासि, दृष्टाऽद्य मया, बलाद्गृह्णामि, पडितिं (पीडिता?) च मां मन्यसे, न मन्यसे चेन्नृसिंहखरनखरतीव्राकृतिं कर्तिकामत्र तव कण्ठपीठावकर्तने कर्मणि व्यापारयामीति सनिष्ठूरास्कन्दमुच्चण्डया गिरा निगद्य सद्योऽपि तदेतदत्यन्तभासुरमदभ्रदंष्ट्राकरालतुण्डमुद्दण्डकर्त्तिकाकपालधरमाविर्विधाय रूपं नैशाचरमनेन गगनाध्वनैव धावितः पृष्ठे। अहमपि प्रभूतभयातुरेण चेतसा पुरः पुरोऽस्य पलायमाना कथञ्चिदेतावतीं भुवमनुप्राप्ता दृष्ट्वा चान्धकूपमधोभुवनप्रवेशधिया तस्यान्तः प्राविशम्। आकृष्य च हठादाक्रन्दन्ती क्रूरसत्त्वेनामुना प्रहर्तुमुपक्रान्ता। चण्डया च गिरा स्मर त्वरितमिष्टं दैवतमित्यास्कन्दितायाा मम सुकृतेन कर्मणा भवन्तमानीय मृत्युमुखकन्दरादाकृष्टाऽस्मि।

त्वदाकारदर्शनादद्ये साऽस्मत्स्वामिन्या जीवितं तत्र पटे केनापि शिल्पिना न जाने किञ्चिद्वा नैपुणनिरूपणाय स्वमतेः, आहोस्विद्विशेषगुणाविष्करणहेतावस्य प्रभोः, उत स्पर्द्धया प्रतिवादिनश्चित्रकरस्य, कृते वा कस्यापि, कृतनैपुणं लिखिता नूनमस्य स्वलावण्यलुण्टितरतीशकीर्त्तिराकृतिर्नरोत्तमस्य। एतत्कृते च तस्या विरहव्यथादुःखमनुभवन्त्याः समुपस्थितोऽयमीदृशो दशाविपाकः। तदयमिदानीमेवं मम नयनगोचरीबभूव, सा पुनः क्व किल कथं

क्षपयन्ती दिनानि तिष्ठतीति चिन्तयन्त्या मम सम्पिण्डितसखीदुःखसम्भारेण बलादेष विगलितो बाष्पजलबिन्दुसन्दोहः। श्रीमन्नीदृग्विधोऽयमावेदितो वृत्तान्तः। तत्खलु स तावदस्मत्स्वामिन्याः प्राणितस्वामी भवान्। किन्त्वेतदिच्छामि बोद्धुं यत्किल क एष विषयः? कतमनामधेयमिदं नगरं यदङ्ग चक्रवर्तिलक्षणानुमानसंवेदितेन भूवलयभर्त्रा भवता राजधानी कृतम्,? कमन्वयमलञ्चकार सुकृतशालिनां वरेण्यः? किं च मत्सखीमदनज्वरहरणमन्त्रयोग्यं नाम बिभर्त्ति? सा च वर्तनमनङ्गस्य, सर्वस्वं त्रिभुवनश्रियो, जीवितं शङ्खपालगोत्रस्य, किमिहास्ते मम हृदयभवनं वयस्या? मिलिता च कच्चिन्माणिक्यवर्त्तिरिव जातरूपस्य भवतः? निवृत्ता च किं तस्यास्त्वद्विरहदोहदौस्थित्यदायिनी दशापि? ममापि किं नाम चिरादपयास्यत्येव तद्गवेषणश्रमणसङ्क्लेशो न वेत्येवमभिधाय भूमीन्द्रवदनविन्यस्तलोचना तूष्णीमकरोत्। राजा तु सपदि मुखाम्भोजधृतया म्लान्येव स्वयमुदयसुन्दरीसङ्कदनमभूयमानं निवेद्य नेत्रकुमुदाश्रिताया विश्वभूतेर्मुखे सर्वं यथादृशं तत्तादृशमेव ज्ञापयित्वा तत्रैव शयनावस्थानसुस्थितां विधाय तारावलीं निजनिवासमयासीत्।

ज्ञातेति सम्मदरसः प्रथमं ततः सा
तन्वी न दृश्यत इति प्रबलो विषादः।
द्वावुद्यताविति कृतप्रसरं विरुद्धौ
निद्राऽनुपद्य विनिषेद्धुमिवान्तरेऽभूत्॥

ततश्च—

चलति रजनिगन्त्रीवक्त्रचीत्कारधीरो
ध्वनिरनुदिशमुच्चैरेकतः कुक्कुटानाम्।
उदलसदवनीन्द्रोद्बुद्धये मागधाना—
मुचितपठितिसाराऽन्यत्र सारस्वतश्रीः॥

इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
तारावलीदर्शनं नाम सारस्वतश्रीपदाङ्कः
षष्ठ उच्छ्वासकः॥

## सप्तमोच्छ्वासः ।

अथ समन्तादतिविकटकुक्कुटकुडुम्बारटितकटुरवोदञ्चनविनिद्रितासु युगपदुन्नदन्तीषु विलासवनविहङ्गमश्रेणिषु, समुपजायमाना (नध्वा) नेषु सुरमन्दिरोल्लासिषु वाद्यमानावसरवादित्रसमुलेषु (समूहेषु ?) क्वणन्तीषु विबुद्धसिन्धुरनियन्त्रणारणितमुखरासु हस्तिशालान्तरालानशृङ्खलासु, प्रवर्तमानेषु दुह्यमान क्षीरधाराझात्कारडम्बरेषु, श्रूयमाणेषु मथ्यमानदधिभरगभीरकुम्भीघरत्कारकवचितेषु चलत्कुटुम्बिनीचटुलवलयमालारवेषु, कलकलायमानेषु सरित्स्नानयात्रोपकरणादर्शनक्षौभ्यदुःस्वरेषु श्रोत्रियद्विजेषु, प्रतिष्ठमानेषु गमनवचनवाचालितनिवासभवनोदरेषु पान्थेषु, स्वावासमन्तर्वलितेषु रजनिजागरजडेषु धार्मिकजनेषु, पुष्पवनमधिप्रधावन्तीषु रतरसनिद्रालसविलोचनासु मालाकारतरुणीषु, निद्रामुपसेवमानासु प्रगल्भतरभुजङ्गजागरितवेदयासु, प्रियगमनादाकुलीभवन्तीषु मानग्रहापगमसम्मुखीनासु मानवतीषु, गृहजनमुत्थापयन्तीषु प्रथमप्रबुद्धासु पञ्जरसारिकासु, मिथुनवृत्तान्युदीरयत्सु निद्रान्तोन्मिषितसंस्कारेषु क्रीडाशुकेषु, हरिचरितगीतकानि गायन्तीषु पुण्यपथप्रवृत्तासु जरतीषु, देवस्तुतीः पठत्सु धर्मक्रमानुलग्नेषु मुनि माणवकेषु, क्रमेण सर्वतोऽप्युद्बुध्यमानसकलजनपदालापनिस्वनमनोहरमाविर्भूयमानभुवनमनुभूयमानदिङ्मुखालोकमुद्भूयमानपृथुप्रभं च बभूव शुभमयारम्भसंरम्भि प्रभातम् ।

यत्र हि प्रविशतो वासरस्य समुचितं माङ्गलिकसत्कारमिव कर्त्तुमभितोऽपि भूतले स्रवदवश्यायसलिलशीकरक्षेपैर्वितरन्नतुच्छकं छ (छां?) टक (?) मतिस्फुटं प्रस्फुटत्पिण्डीतगरपुटकपरिपाटिवलयादुच्चलन्तीभिः किंजल्क (ग) लच्चूर्णराजिभिर्भरन्भूरिशो रङ्गावलिविशेषान्, सायान्तनोन्मिषितमालतीशिथिलवृन्तनिर्मुक्तैरवगलत्कुसुमनिकुरुम्बैर्विकिरन्मनोहरं पुष्पप्रकरम्, उद्बुद्धमुखाञ्जनो (ङाञ्जनामुखो ?) द्भूतनिद्रान्तजृम्भिकाश्वाससङ्गमसमाहृतोदारपरिमलानुमार्गधाविताभिः प्रघनमधुकरश्रेणिभिः पदे पदे विरचयन्नायतगुरूणि तोरणानि, विनिद्रनवकुसुमवाटिकाटीकमानमालिनीसीमन्तसरणिसिन्दूरोदञ्चनविपञ्चितमहोत्सवाचारः, क्रीडासरसीषु सुप्तान्युद्बोधयितुमिव चालयत्पुण्डरीकानि, विकचमुचुकुन्दकुसुमदलनिष्ठुरसटास्फालदलितरयमन्थरो निसर्गशिशिरः सकोमलस्पर्शमावाति प्रत्यूषचारी समीरणः ।

ततश्च—

कालक्रमादुपरतिं समुपेतवत्या
व्यस्तीभवत्सदितनष्टकलेवरायाः ।
रात्रेः कपालमिव पाण्डुरमस्तशैल—
कूले लुलोठ निरभी(शु)हिमांशुबिम्बम् ॥

अन्यतश्च—

नाद्याप्यपैति भृगुभौमगुरुप्रधान—
स्तारागणोऽयमिति कोपकषायितस्य ।
अह्नः कटाक्षलतिकेव झटित्युदस्था—
दाशोणरोचिरुदयाचलमूर्ध्नि सन्ध्या ॥

क्रमेण च—

प्रातःश्रिया रचितमच्छरुचो(ऽम्बर)स्य
लज्जा(पर्या?)यविद्रुमदलद्युतिसोदराभम् ।
पूर्वाचले समुदभून्नवपद्मसूत्र—
सत्कुञ्चिकातिलकचिह्नमिवार्कबिम्बम् ॥

इतोऽपि—

देवेन सर्वजगदुग्रदुरन्तरोग—
संहारकेण दिवसप्रभुणा निरस्तैः ।
कुष्ठस्य शुभ्रतिलकैरिव··········
तारागणैर्गगनमुज्झितमस्तशेषैः ॥

अथ क्षणेन प्रसरद्भिः किरणमालिनो मयूखैर्वियत्कक्षान्तराणि, विकसद्भिर·························श्चक्रवाकयुगलैर्जलाशयतटानि, विलसद्भिस्तल्पतलोत्तीर्णभा निनीकटाक्षैः निकेतनानि, भास्वद्भिस्तत्काल·································केतन तथाऽहनि·········निवर्ष-द्भि-तलवद्वा-ह्रा कस्यमाणवशतदीधितिप्रतानैर्द्विगुणितवैभातिकप्रभामं··································राजत् । तस्मिन्सकलभुवनकोशोद्धाटनपटीयसि प्रभातसमये प्रविशदवसरवराङ्गनारणन्मणिकिङ्किणीझणत्कारमधुरितेन वन्दिना मुक्तसूक्तारवेण प्रबुद्धो महीपतिरुत्थाय निर्वर्त्य च प्रत्यूषसमुचितं कृत्यजातमाहूय रभसादभीष्टाय कुमारकेसरिणे तं रजनिचर्यावृत्तान्तमखिलमावेदयांचक्रे । निवेद्य च प्रस्ततेन यथा ( प्रशस्तेन पथा ? ) त्रिपथगाम्बुचुम्बितजटाकिरीटशिखरमर्धेन्दुशेखरं भगवन्तमर्चयितुमुचित···री···

दारम्भार्थमुत्थितवान् । अथ क्रमेण पवित्रितशरीरो यथाक्रियमाणंविकसितपत्रकवकुलकमलमुचुकुन्द (च) म्पकादिकुसुमसञ्चयप्रचुरैरुचितशुचिरुचिरसिचयालङ्कारहारादिभिरगरुकर्पूरधूपदीपादिभिरुपचारैः परिसमापितमहेश्वरोपहारनित्यक्रियः तत्कालमनाकुलावसरसम्मिलितेन बहुलितो मदनमोहेन स्वप्नसंवृत्तमिव तं सर्वं शर्वरीव्यतिकरमाकलय्य परिस्फुटीकर्तुं, पुनरीक्षितुं तारावलिं, दर्शयितुमस्याश्चित्रपटम्, अनुभवितुमनवद्यमुदयसुन्दरीकथाकर्णनरसैकसौख्यम्, अतिवाहयितुमनङ्गमार्गणोदग्रवेदनादुःखानि सस्वादयितुमीश्वरायतनवृत्तान्तेन कुमारकेसरिणम्, आलोचयितुमुपरिष्टादनुष्ठेयमतिस्तोकाप्तपरिग्रहः सह कुमारकेसरिणा नगरप्रचारसाध्वीमधिरुह्य कुञ्जरकुटुम्बिनीमुत्सुकेन मनसा मठं विश्वभूतेर्जगाम । अवतीर्य च द्वार एव परिस्वलितनिखिलान्यलोकः कुमारकेसरिणमादाय सन्मुखसमागतेन विश्वभूतेः शिष्यवर्गेण निर्दिश्यमानवर्त्मा मठस्य प्रगुणितवरासनामुपरितनीं भूमिमध्यास । तत्र यथोचितमागत्य स्थितां तारावलीपरीतपार्श्वां भगवतीं विश्वभूतिमवनतेन मौलिना प्रणम्य तत्पादपल्लवार्पितमाशीर्वादसमनुगं पुष्पदाम सविनयं जग्राह । विश्वभूतिश्च वत्स किमप्यारब्धमुपास्तिकर्म निवर्तनीयमास्ते तन्मुहूर्तादिव निवर्तयामि यावत्तावदनया सार्द्धमभीष्टकथारसेन क्षणान्तरमतिवाहयेति पुरस्तादुपवेश्य तारावलीमभ्यन्तरं विवेश ।

राजा तु रजनिशयनावस्थानसुखप्रश्नगौरवेण सन्मान्य सदृष्टिक्षेपं निर्दिश्य कुमारकेसरिणं तारावलीमवोचत्—जानाति भगवती कोऽयमिति, साऽपि स्मेराननं तमालोक्य स्मित्वा प्रत्यवोचत्—देव जानामि स एष समुद्रान्तः शङ्करायतने तेनास्मत्स्वामिनीजीवितेन समं चित्रपटेन शापाहतो महात्मा कथं च पुनरेनां निजप्रकृतिमासाद्य मिलितो देवस्येति कथ्यमानमवगमिष्यामीति प्रोक्तो महीपतिस्तत्सर्वमादितो निवेद्य तं चित्रपटमन्तिकस्थस्य ताम्बूलकरङ्कवाहिनो हस्तात्स्वयं समर्पयामास । साऽपि तस्मिन्नुद्वेष्टिते तथा विलोक्य चित्रगतामुदयसुन्दरीं झगिति प्रत्यग्रीभूतविरहव्यथोत्पीडगाढितादन्तःकरणयन्त्रादुद्गतेनेव बाष्पाम्भसा भरितलोचनद्रोणिरतिकरुणं हा वयस्ये प्रेयस्युदयसुन्दरि ! चिराच्चित्रेण दृष्टाऽसि क्वासि भृशमभीष्टजनविप्रयुक्तमात्मानं क्षपयन्ती कालमतिक्रामसीति दुःखपरतन्त्रचित्ततया शिथिलितग्रहं तं पटमुत्सृज्य विधृत्य च करतलयुगलेन भालस्थलमवनतमुखी हठान्निपतन्तीभिरश्रुधाराभिरुच्चस्वनं रोदितुमारेभे । राजा तु रुदन्तीं तामवेक्ष्य कृपा-

कदर्थितया दृशा कुमारकेसरिणमपश्यत् । सोऽपि प्रभोरभिप्रायमासाद्य सप्रश्रयं तामवादीत्—युज्यत एव कः किल न रोदित्यभीष्टविरहेण घट्यमानहृदयशल्यः प्रेमपरिलङ्घितो जन्तुः—विशेषतस्तु रुदिताध्यवसायजन्तुः स्त्रीजनः । किन्तु धीमता स्वधीभिरन्योऽयमात्मा, यत्किल विधिव्यापारपरवशो वस्तुनि किमङ्ग क्रियते सह्यत एव यद्यथोपैति तत्तथैव सर्वम्, सर्वतत्वावबोधजुषो भवत्यास्तु किमत्रोपदिश्यते, विहाय हृदयवैधुर्यबोधकं तत्प्रेमभावनाभ्यासङ्गमिदानीं तथा क्रियते यथा कुतश्चिदचिरादेव दृष्टिविषयमागच्छत्युदयसुन्दरीत्यादि कुमारकेसरिणा रुदिताकूतप्रधावितया च विश्वभूत्या च सादरमुद्बोधिताऽसौ प्रक्षाल्य विश्वभूत्योपढौकितेन कमण्डलुवारिणा वदनकमलमपमृज्य च स्फुरदरुणनासापुटंस्खलदक्षरं शनैरवोचत्–राजन्निह न शक्नोमि त्वदन्तिके प्रियसखीं विना क्षणमपि स्थातुम्, छिनत्ति चैष प्रतिक्षणमुदीक्ष्यमाणश्चित्रपटो मदीयं मर्मेति वदन्त्या एव तस्याः सहसैव पुनर्निरुद्धकण्ठो हठादपतदश्रुधारासन्दोहः ।

अथ तेन तस्या उदयसुन्दरीविषयिणा प्रेमानुबन्धवैधुर्येण प्रबोधितानङ्गवल्गिक्लेशमवनीशमपि त्रपया छन्नं निःश्वसन्तमाकलय्य कालोचितं विश्वभूतिर्जगाद—वत्स ! किमेवमास्यते, न खलु सखीविप्रयोगतरलं मनः स्थिरीकर्तुमसावद्य चित्रदर्शननवीभूतदुःखा शक्नोति, भवन्तस्तु राशयो धैर्यस्य, तन्नाम तत्किञ्चन यथोचितमासूत्र्यते, ताः काश्चन बुद्धयो व्यापार्यन्ते, तानि कानि चिद्व्यवसितानि स्वीक्रियन्ते, सा काचन सहायसम्पत्तिराद्रियते, ते केचन पुमांसः सञ्चार्यन्ते, स च कश्चन महोपायश्चिन्त्यते, येन—

स्वर्लोकादपि दन्दशूकभुवनादासप्तसिन्धूल्लस-
　　द्वेलावारितरङ्गताडितवनादन्विष्य भूमण्डलात् ।
आनीता त्वरितं गृहस्थितिमतां धर्माधिकारेषु सा
　　तन्वङ्गी लगति क्षितीश रुचिरा मुद्रेव हस्ते तव ॥

किमु किल मर्त्यलोकावतीर्णसुपर्णवाहनाकृतेरसाध्यमिह महाराजस्य, तदुत्थीयतामितो निर्वर्त्यतामखिलं पौर्वाण्हिकं कृत्यम्, अतिक्रामति च वेला, तारावलि ! त्वमपि किमेवमत्यन्तमुत्ताम्यस्ययमवनीन्द्र एव स्वयमत्र प्रयत्नवानास्ते, यतो विधिरपि बिभेति कृताध्यवसायादमुष्मात् । अतः सोऽपि करिष्यत्यचिरादनुकूलीभूय तया सह युवयोः सङ्गमं समकालमिति विश्वभूतिवचनात्तारावली शकुनग्रन्थिबन्धमपि( यी ? ) तथ्यार्थसुभगाऽस्तु भारती भगव-

त्या इति सप्रत्याशमुक्त्वा प्रसादितमुखी राजानमुत्थितं व्रजन्तमनुव्रज्य गौरवपरिस्खलिता तामेव भगवतीमनुजगाम ॥

राजा तु निजं निवासमासाद्य यथावसरकृत्यनिर्वर्तनादनाकुलः, हृदिस्थैस्तारावलीनयनजलबिन्दुभिरार्द्रीकृतकुसुमशरशिलीमुखासारभूरिव्रणः, तदुग्रवेदनयासुदूरमारब्धः, चिन्तयाञ्चकार—ननु क किल सा नाम रम्योदरी भविष्यति, सहसा सौधसद्मनि सुप्तैव न दृश्यत इत्यपहारात्कारणमखिलमन्यदमुख्यमेव, यतः कथं नु तादृशं युवतिरत्नमर्थिभिर्नयनगोचरीभूतमुत्त्यज्यते। न च निखिलसुलक्षणानुमेयकल्याणवसतिः सा तादृशी मूर्त्तिरपायैरपि स्पृश्यते। तदिह विश्रान्तस्तस्याः स्थितिं कथमहं ज्ञाताऽस्मि; यत्किल स कश्चिदुपायोऽस्ति ? यो न तां गवेषयितुं पित्रा शिखण्डतिलकेन कृतो वर्तते। किन्तु तेनाप्यन्विष्य लब्धाऽसौ पातालवासित्वादगोचरैवास्माकमस्ति। अपि चेत्तारावलीद्वारेण सम्बन्धोपायस्तथाऽपि यद्यसावन्विष्य समानीता पितुर्गृहमागता भवेत्तदा किमप्यध्यवसितुं पार्यते। यस्यास्तु मूलत एव न ज्ञायते स्थितिस्तत्र किं कर्त्तुमुपपद्यते अतः कथमसावन्विष्यते। न च तावन्मनुष्यजन्मनः कस्याप्यन्यत्र नरलोकादस्ति प्रचारः। सर्वत्र परं प्रचरन्ति सुरसिद्धविद्याधरोरगयक्षराक्षसा एवेति वाक्यान्ते राक्षसपदोपादानादये ! साधु स्मृतमस्ति मे विक्रमैकसिद्धो मायाबलनामा निशाचरवीरः, तेन कृत्वा सर्वतोऽप्यन्वेषयामि तां शशिमुखीम्। किमालोचितेन भूयसेति चेतसा विनिश्चित्य कृत्वा समाधिं ध्यातवान्मायाबलम्।

अत्रान्तरे च द्विजाकारसौम्यया मूर्त्या देव ! यः स्मृतो देवेन सोऽहमादिश यदर्थमनुस्मृत्य बाढमनुगृहीतोऽस्मि, यदत्र किलाब्रह्माण्डशिखरात्कूर्मराजमर्यादमदृश्यं दुर्गमं दुर्लङ्घ्यदुर्घटमसाध्यं च किञ्चित्तदेकेनैव क्षणेन साधयामीति कृताञ्जलिपुटः प्रणम्य मायाबलः पुरो बभूव ॥

राजाऽपि रभसात्तत्र पटे चित्रगतामुदयसुन्दरीमुपदर्श्य भ्रातरमुना रूपेण विश्रान्तरङ्गनारत्नमुपलभ्य त्वरितमागच्छेति तं नक्तञ्चरं सुभटमादिदेश। प्रतिपद्य च प्रेषणमुत्पत्य गते तस्मिन् सप्रत्याशमिव तस्यैव प्रचारशक्तिभावनया तं दिवसमत्यवाहयत्। अभावयच्च निराकुलावसरप्रवेशिना प्रेमरसविजृम्भितभ्रमेण सम्भ्रान्ते चेतसि दशादौस्थ्यदुःसहमवस्थानमुदयसुन्दर्याः।

किं शीतैरथवाऽऽतपात्रि( दि? )भिरुत क्षोणीतलोल्लङ्घनै—
राहोस्विन्नववन्दिमन्दिरपरिक्लेशादिभिः साऽथवा ।
मत्सम्बन्धिभिरप्यनङ्गविशिखाघातव्रणैः पीडिता
हा प्रत्यग्रमृणालकोमलतनुस्तन्वी क्वचित्सीदति ॥

अथवा तामशेषशुभविभूतिपात्रं प्रति प्रोषितेन चेतसा शून्यीकृतो मृषाऽहमेतदेवं विकल्पयामि । किन्तु—

चेतस्तां गतमिन्दुसुन्दरमुखीमायाति कस्मादये
प्रत्यङ्गं मदनोत्सवस्तरुणिमाभोगोऽद्य तस्यास्तनौ ।
तत्रैतज्जघनोदरस्तनमुखश्रीभिः क्रमेणातिथी—
भूतं हन्त निमन्त्र्यते मुहुरिति व्यग्रं किमागच्छति ॥

यदि वा—

तत्रैव सुदृशस्तस्यास्तच्चिरावस्थितिक्रमात् ।
वशीभूतं मनो नूनमायास्यति न तां विना ॥
तदत्र हेमाण्डमहार्णवोदरं
श्रियेव दूरादवगाह्य लब्धया ।
उरस्थलारोपितया मृगीदृशा
कदा भविष्यामि त(स?)दाऽहमच्युतः ॥

अपि च—

कदा नाम म(म) दृष्टिस्तस्याः क्वचिदनङ्गदवथुदुःस्थिता विरहिणीव चरणपल्लवास्तरणे लुठिष्यति, क्वचित्कौतुकेन पल्लविता लतेव जङ्घोरुदण्डशरणा प्रसरिष्यति, क्वचित् शृङ्गारिणी गणिकेव जघनाङ्गणे स्थास्यति, क्वचिन्माराकुला भुजगीव नाभिरन्ध्रं गमिष्यति, क्वचिद्विस्मयाच्च गता श्रान्तेव त्रिवलिमण्डपमाश्रयिष्यति, क्वचिद्यौवनविडम्बिता स्वैरिणीव कुरुलान्धकारे सञ्चरिष्यति, क्वचिद्रागिणी सिन्धूररेखेव सीमन्तपदे यास्यति, क्वचित् हर्षोद्वेल्लनविलोला शफरीव लावण्यपयसि सर्वतो विहरिष्यति, किं च कदा नु मे हृदयसुखसाधकस्तदालापः कर्णविवरे प्रवेक्ष्यति, कदा पर्यन्ततीक्ष्णा तूलिकेव तद्दृष्टिरङ्गभित्तौ भ्रमिष्यति, कदा वाऽसौ कल्याणवसतिर्निधानकलशीव करे लगिष्यति, कदा च नवरुचिस्थानं रत्नमालेव कण्ठग्रहं करिष्यतीत्यादिभिः प्रतिक्षणमुदञ्चता तद्रूपभावनाविशेषेण वास्यमानहृदयसम्भूतैरमीभिरभीष्टदोहदशतैरात्मानमविरतं व्यापारयन् समन्मथावस्थमस्थात् ।

अथापरेद्युः प्रातरेव कृपावती नाम शिष्या विश्वभूतेः समागत्य जय महाराजेत्याशीर्वचोनुगं कमलपूलकमुपढौकनीकृतं समर्प्य समुचितोपवेशनातिथ्यसन्मानिता राजानमब्रवीत्—राजन् ! आर्या त्वामाह यथा किल तारावली तस्मिन्नेवाहनि मठान्निवाससमागते त्वयि हठात्प्रबोध्य कारिताह्निकविधेया स्मृत्वा तत्तदशेषमुदयसुन्दरीव्यतिकरमश्रुपातमात्रानुमेयकर्मणा रुदितेन तामशेषां रजनीमनैषीत् । विभाते च त्वरितमुत्थाय पुष्पोच्चयमिषेण कुसुमवाटिकामुद्दिश्य यत्खलु निर्गत्य गता, तदिदानीमेतितदानी मेतीत्येवं न तत्राह्नि समागता । न चास्माभिरयं उदयसुन्दरीवियोगदुःखिता न ज्ञायते क्वापि याति किञ्च करोत्येकाकिनीयमिति समन्तादितस्ततो निपुणं तद्दिनमशेषमन्विष्टाऽपि दृष्टा । न च निवेदितं भवतेऽपि, येन प्रायः कश्चिदिहापि पुरा परिचितः सुहृज्जनो मिलितो भविष्यति स नीत्वा गौरवेण निजं निलयमातिथ्यसत्कारेण तामद्य सन्मानयिष्यति, किमेवमविवेकिनी तारावली, येन मामपृच्छयन्त्येव कुत्र चिद्याति, तत्प्रातरवश्यमेष्य(ती)ति । न चागता प्रातरपि । एवमद्य गतायाः क्वापि तस्यास्तृतीयो वर्तते दिवसः । तन्नूनमसाविह न शक्नोति वीक्ष्यमाणा भवन्तमुदयसुन्दरीं विना स्थातुमिति यथैव पूर्वं गृहान्निर्गता तां गवेषयितुमेवमितोऽपि मन्ये गता भविष्यति । तन्न भवता परामर्शपण्डितेन शोचनीयाऽसौ । न चानीतया गवेष्य तया किञ्चन प्रयोजनमस्ति । स चान्वेषणप्रयासो वरमुदयसुन्दर्याः क्रियते । सा पुनर्यस्मिन्नुदयसुन्दरी तत्र सर्वतोऽपि भ्रान्त्वा स्वयमेष्यति—इत्यादि सम्यक् सोपदेशमाख्याय लब्धाशिषा नृपेण सप्रश्रयमशेषं तथेति तद्वचः प्रतिपद्य विसर्जिता सप्रतोषमयासीत् ।

अनन्तरमनेन तारावलीगमनविस्मयरसेन जडीकृतान्तःकरणवृत्तेः, उदयसुन्दरीव्यतिकरानुचिन्तनपथायातमन्मथशरघातवेदनादूयमानमनोविह्वलतया कुतोऽपि निर्वृतिमलभमानस्य, स्त्रीरत्नफलितायाः प्रतिदिनमुदञ्चदाशाकल्पलताया मूलमिव तमभ्यर्णवर्त्तिनं कुमारकेसरिणममृतरसावसेकसुभगेन दृष्टिपातेन समुपशीलयतः, सह तेन ननु क्व किल तारावली गमिष्यति ? केन पथा प्रस्थितवती ? किमङ्ग सत्यमुर्वीतले प्रियसखीमवेक्षितुमगात् ? उतान्तरे किमपि व्यपायरूपमन्वभूत् ? किमस्याः संवृत्तमित्यादि परामृशतः, क्षणं च क्व नाम तवासावुदयसुन्दरी दृष्टिपथमुपेता ? कथमवलोकिता ? किं कृतवती ? किमुक्तवती ? कस्मादागता ? कस्य कुलवर्त्तिनी ? क्व वर्तत इत्यादि कथित-

मप्यकथितमिव (श्रुतमप्य)श्रुतमिव ज्ञातमप्यज्ञातमिव पुनः प्रश्नैरावर्तयतः, हृदयानुवर्त्तकेन कुमारकेसरिणाऽपि मुहुर्मुहुराख्यायमानाभिरिमाभिरेव कथाभिरशून्यानि गमयतो दिनानि मेदिनीन्द्रस्य; जलदतिमिरा(प)सर्पणनिरर्गलोऽयं मयि सति लब्धप्रभो हरिणलाञ्छनः करैरनङ्गशरशल्य(निहत)मुद्धृदयमुर्वीपतिं व्यथयतीति प्रोषिते शरत्काले, तामेव सततमुदयसुन्दरीं ध्यायतो नियतमभिनवयवोपान्तसञ्च(र)त्क्रौञ्चकुलकठिनकेङ्कारमुखरोऽहमसम्मतो नरपतेरिति निष्क्रान्ते हेमन्ते, हिमपरिग्रहेण मया स्मरानलकरालितावनिपचित्तसन्तापशा(मक)सुभगानि प्रलीयन्ते कमलकाननानीति निःसृते च शिशिरे, समयसेवोपचारमिव कर्त्तुं मलयगिरिशिखरसरसीतरङ्गजलजडिमसमधिकसमीरणव्यजनप्रगुणः, प्रगुणीकृताविरलव(कुल)कुसुमकोशभरितमधुरसजलार्द्रोपकरणः, स्वेदप्रतीकारकृते विकसदतिविशदसिन्दुवारसम्भृतानल्पतरपरागकैतवोपरचितकर्पूरचूर्णः, तल्पार्थमिव गृहीतनवनिरन्तरतरुप्रवालपेशलाभोगः समागतो वसन्तः।

यत्र—

सम्प्राप्तः सुहृदो वसन्तदिवसादेकोऽपि चूताङ्कुरः
कन्दर्पेण शरीकृतस्त्रिभुवने भिन्नक्रियं वल्गति।
मानं मानवतीषु कर्षति मनो मथ्नात्यलं रागिषु
प्राणानत्ति वियोगिनीषु पथिकेष्वन्त्राणि निष्कृन्तति॥

अपि च—

यस्मिन्नमुद्रमुकुलारचिताम्रसम्प-
दुच्छृङ्खलेन मधुना हृदि वर्त्मगानाम्।
आस्फाल्यमानझषकेतनकङ्कपत्र-
शल्यस्वनं पिकरुतान्यनुमापयन्ति॥

यत्र च—

त्रिभुवनानन्दप्रदायिनः समदमलयकामिनीकर्णपूरविरचितारविन्दकोशप्रवेशलालसाः श्रान्ता इव वसन्तः पयोधितटारामग्रामेषु, शिशव इव खेलन्तस्ताम्रपर्णीतरङ्गदोलासु, अतिथय इवोपतिष्ठन्तः कावेरीचलन( कूलल ? )तागृहेषु, पथिका इव मिलन्तो गोदावरीजलतुषारसार्थेषु, मृगमदमशीलिखितानि कलयन्तः पण्डिता इव पाण्डीकपोलपत्त्राणि, धम्मिल्लवेल्लीगतानि चिन्वन्तो मालिका इव कुन्तलीशेखरकुसुमानि, मन्मथनिधीनुद्घाटयन्तः सिद्धा इवा(न्ध्र)

सीमन्तिनीस्तनकलशान्, केसरपारागोद्धर्तिंभृतोऽङ्ककारा इव वन्नतः ( वनन्तः ? ) कोङ्कणीनामङ्कस्थलकेषु, पुन्नागमधुरसस्वेदिनो मल्ला इव मिलन्तो महाराष्ट्रकुटुम्बिनीनामूरुस्तम्भेषु, परिमलमिलितालिपटलकवचिनः सुभटा इव लगन्तो लाटलीलावतीनां वलिषु, मन्दगमनाः कर्णाटनारीकुचपत्रकस्तूरिकापङ्किलपथेन, शीतलाश्लिलिङ्गतरुणीकुरुलवनच्छायोपसेवाभिः, सुरभयः सविभ्रमाभीरभामिनीमुखामोदेन, चन्दनगिरिपरिसरोद्यानमण्डलादुच्चलन्तश्चलकुसुमकतरुहस्तकाभिनयभारलकाः प्रसरन्ति दक्षिणदिगङ्गनाश्लेषमिलितकर्पूरसौरभसुगन्धयो गन्धवाहाः । किं बहुना—

> भ्रूभूमिं केरलीनां मुरलमृगदृशां विभ्रमोत्तंसदेशं
> चोलीनां चारुकाञ्चीविषयमपि वलीमण्डलं सिंहलीनाम् ।
> आक्रम्याम्भोधितीरे तरुकुसुमरजस्तम्भमुत्तम्भयन्तो
> याम्याः पुष्पायुधस्य व्यदधत मरुतो राज्यमेकातपत्रम् ॥

अथ तत्र तरुणजनहृदयसद्मनि प्रवेशमङ्गलमुहूर्ते मन्मथस्य, व (वा?)यौवने तरुश्रियां, रसायने(कुसु)मानां, नायके सर्वर्तूनाम्, उत्सवे विलासिनां, शृङ्गार सुहृदि विकचविचकिलमकरन्दसुन्दरामोदमिलितषट्चरणचक्रनिर्लूनमानिनीमानकन्दले दलद्बकुलपाटलाशोकसहकारमधुरसभरासारभग्नाध्वनीनवर्त्मनि वसन्तसमये; निबिडतरुपत्रपल्लवास्फालशब्दसुभगेन निभृतमुल्लपितवचनस्वनाभासमिवोच्यमानो मलयमारुतेन, मुकुरमधुमिलितकुटिलषट्चरणराजिरेखाग्रचलनसन्निवेशिभिः सभ्रूशिखास्पन्दनमिवानुमन्यमानश्चूतद्रुमैः, समीरणान्दोलनचलितहस्तकैः सहस्रसंज्ञमिव पूगीवनैः प्रेर्यमाणो राजा सदा मान्यमपि महत्तरं धैर्यमवधीर्य तस्यैककन्यकावस्तुनः कृते हृदयमनङ्गगृहे दासीचकार ।

तेन च—

प्रतिदिवसमादिश्यमानमानसो विबुद्धमन्मथहुताशनोत्ताप्यमानः प्रज्वलन्तमिवाखिलं परिग्रहमपहाय, पीयूषवृष्टिनेव कुमारकेसरिणा परिगतः, शिशिरेषु हर्षवशविसारिविहरणरसप्रसक्तकलहंसकामिनीमुखविखण्डितोल्लासितमृणालनलिनकिसलय (विलाससरसीतटेषु) गिरिसमीरताडितनिबिडताडीरवोत्रस्तहरिणरमणीकुलतरलनेत्रनीलोत्पल(नि)करपेशलेषु लीलावनेचरस्थलेषु यौवनभरमन्थरोद्यानपालिकाविकीर्यमाणदृष्टिकाममञ्जरितलतानिकेतनेषु च प्रमदवनेषु रममाणः, पुरोऽवलोक्य सभ्रूक्षेपनिर्देशमुवा च कुमारकेसरिणम्—अहो पश्य पश्य ।

एतस्मिन्नलिनीवनेऽस्य नियतं कान्तावियोगभ्रम—
भ्रान्तं चित्तमवाप्य षट्पदपतेर्लग्नोऽङ्गजन्मा ग्रहः।
तेनैष प्रलपन्विशृङ्खलमुखो राजीवधूलीभृतः
शून्यं भ्राम्यति सर्वतो मधुलिहामावेष्टितो वालकैः॥

अन्यच—

चक्राह्व(य)स्य शतपलवनप्रचार—
संलग्नसान्द्रमकरन्दरसप्रसिक्ता।
यामा(भूयो?)वियोगदुरितप्रशमाय....
लाक्षा सेवकवसु (वसेककलितेव?) वधूर्विभाति॥ (?)

इतश्च—

एष प्रभूतमुकुराहरणप्रसक्ति—
सन्तुष्टकोकिलनिकूजितकैतवे(न)।
चैत्रेण भू(चू?)तनिल(येन) निश्री(ची?)यमानः
पञ्च(श्चेषु?)सायकशिखाध्वनिरुल्लास॥

अस्मिन्नपि—

क्रीडावने पश्य नवप्रभूतपुन्नागपुष्पाञ्जिपतन्परागः।
गन्धोपलक्षोद इव स्मराग्निमुद्दीपयत्येष मनस्सु यूनाम्॥

इह हि—

चन्दनाचलसमीरदोलिता मूलमुक्तघनरेणुधोरणिः।
रागिणां क्रकचिकेव मानसं पाटयत्यहह चूतमञ्जरी॥

कुमारकेसरी च व्यञ्जिताशयैरमीभि( री )दृशैरालापवचोभिरवनीन्द्रस्य हृदयमाकलय्य विषीदन् अहो प्रगाढमिह गृहीतोऽयमनङ्गग्रहतकेन स्वामी, ना। प्यतोन्यत्र मया नीयमानोऽपि यास्यति, न चेदृशं प्रदेशमपहाय रागिणां निर्वृतिः, तदिहैव नाम कैरुपायैरुद्दिश्य च किमालम्बनमुदयसुन्दरीकृतामस्य मन्मथ( व्य )थामन्तरयामीति समन्ताद्दत्तदृष्टिरेकतो विलोक्य ससम्भ्रमं जगाद स्वामिन्! इत इतो निवेश्यतां दृष्टिरवेक्ष्यतामियमत्र वनवीरनाम्ना किरातराजेन कुतश्चिदासाद्य सरभसमानीयमाना, धृता च दारकेण वल्गायाम्, पर्याण सज्जिता, स्वागतोपहारढौकितेव सर्वर्तुराजेन मधुना, चरणसंचरणोपरोधदत्तेव दिक्पालैः, अनन्ययोग्येत्युपायनीकृतेव शक्रेण, वाहनैकरत्नमिति प्रीतिपरिक-

ल्पितेव वेधसा, प्रभूतवेगास्पदतया शरीरसिद्धिरिव मारुतस्य, प्रत्यक्षतेव चित्तस्य, रूपान्तरोत्पत्तिरिव गरुडस्य, जन्तुपरिणतिरिवासूनामाङ्गिकप्राणप्रकर्षतया, वेगमतिहठादाच्छोटयितुमिव रंहसा प्रसिद्धेषु प्रविष्टालोकहृदयेषु, त्रिविक्रमवत्रिभिरेव क्रमैर्विश्वमतिक्रमितुमीश्वरा, मङ्गलार्थमिव क्रमं चतुर्थमाबिभ्रती, हयजन्मनोऽन्यस्य ग( ति )त्व( रा )मसहमानेव मुहुर्मुहुःस्फुरता घ्राणाग्रभागेन भासमाना, मुखान्तर्विरमता स्फुरन्मसृणहेषारवेण त्रिभुवनोल्लङ्घनप्रतिज्ञामिव कुर्वती, तेजसा सर्वतश्चलदङ्गतया धरणितलस्पर्शघृणयेव कम्पमाना, गतिजवनिषेधक्रोधादाताम्रितेव मञ्जिष्ठारागपाटलं वर्णमादधाना, विशिष्टगुणाधारस्रष्टिना स्वरूपेण चातुष्पदीजातिमुत्कर्षयन्ती, सहगमनवेगाद्भ्रमगतेर्मरुतो बलस्वार्थ(सार्ध?)मिव लम्बिताभिरतिमसृणघनसटाभिरुद्भासितेन बन्धुरा स्कन्धेन, स्निग्धा रोमभिः, तथा कर्णाभ्यामुपचितबलाप्यश्वि(स्थि?)मयी मुखेन, स्वरूपमुग्धाऽपि विदग्धा पदन्यासे, अदृष्टपूर्वैव सुरलोकसम्भवाकारविभ्रमधरा, मनोहराङ्गी तुरगीति कुमारकेसरिवचनाद्राजा झटित्यन्यतो विकृष्य तस्याम-रविन्दसुन्दरं चक्षुः सविस्मयमपातयत् ।

दृक्पातसमकालं च तया सह पुरः प्रासेन प्रणम्य विज्ञप्तः किरातराजेन—देव ! अद्य विन्ध्यस्य महागिरेः परिसरभुवि प्रचरतो ममाग्रे झगिति परमसावम्बरतलादत्तफालमत्यन्तहरितदूर्वास्तम्बोपरि पपात, न जाने किं सत्यमियमम्बरादेव रविस्यन्दनमपहाय सरसदूर्वाहारकाङ्क्षिणी क्षोणीतलमवातरत्, उताद्रिशिखरादमरजन्मनः कस्यापि वाहनमेवं झंपामदात् । ( मनवष्टंभमपतत् ?) अवेक्ष्य च स्वरूपमेवंविधममुष्या विस्मितेन मया चिन्तितम्—अहो ! कस्येयमसदृशाकारचार्वीकुतो वाऽत्र वितीर्य फालमागता ? मन्ये सप्तभ्योऽपि रविरथतुरङ्गमेभ्यो गतिवेगमाधाय निर्मितेयं विश्वसृजा तेन ते समतलमप्युदयास्तशैलयोरन्तरालमखिलेनाह्ना लङ्घयन्ति । उच्चैश्रवा अपि निष्क्रम्य समुद्रमथनादेनामुदीक्ष्य निजपरिभवाशङ्कया नात्र महीतले स्थितिमकरोत् । समीरणश्चायमिदं यानैकरत्नमपहाय हरिणमधिरूढो व्रजन् तरल इति मतो लोकेन । किञ्च न तावदिह नूनमेनां त्रिदशतुरगातिरेकसुन्दरामाकृतिं वहन्तीं मनुष्यजन्मा कश्चिदधिरोढुमर्हति । तन्न यदि भ्रियमाणा झगित्यपक्रामति, तदियं मर्त्यलोकशक्रस्य वाहनार्थमुचिता भविष्यति चेत्स्वामिन इति सम्प्रधार्य सद्व्यञ्जनोपायमनुसरतोऽस्य दारकस्य हस्तेन मया धारिता, मया किमस्य भ्रियते शङ्कितैः, एवममुना छलेन विधृतास्माभिरियं त्वनुत्रस्तहृदया सिद्धेव निःशङ्क-

मास्ते। ततश्चात्मनः पर्याणपरिकरेण प्रगुणीकृत्य सेयमानीता देवस्य पादान्तिकम्। उपरिष्टाद्देवः प्रमाणमित्युक्त्वा विरराम।

अथ कुमारकेसरिणाऽपि—अये निरुपायलब्धेनामुना रसान्तरेण राज्ञः सुदूरमन्तरयामि प्रस्तुतमनङ्गपीडाकरं रसमिति विचिन्त्य वीक्ष्य तां सम्यक् सर्वाङ्गमवगतस्वरूपेण विज्ञप्तः—स्वामिन्! अवधार्यतामसौ तावस्य (तावदस्ति) नवधा तुरङ्गजातिषु तोकोराजातिरुत्तमै(व)। साक्षादष्टधा हयलक्षणे च संस्थाने तावदुच्छ्रायो दैर्घ्यं परिणाहश्चेति यथावदङ्गुलसंख्यया प्रधानमानोचितप्रमितिरुत्कृष्टैव, श्रवणयोश्च युगं यादृक्शास्त्रेणोक्तमस्ति तादृग्लघुतया श्रेष्ठं, मृदूनि च पश्य केसरत्वक्तनूरुहाणि, निर्मांसताऽपि जानुजङ्घाननेषु, नयनदशनस्तनेषु च वास्तवं स्निग्धत्वम्, असावप्युच्छ्रायवती ग्रीवा,खुरेषु निष्ठितमेव काठिन्यम्, पृथूनि च ललाटकटिस्कन्धपृष्ठाक्षिवक्षस्थलानि, किमुच्यते यथोक्तैव संस्थानगुणेनासौ वर्णेन च मूलवर्णचतुष्टयात्पाटलच्छविः। आवर्तैस्तु यथास्थानमुचितैरेव चिह्निता, ध्वनिना च सङ्ख्यस्य(शंखस्य?) ह्रेषते। देव सत्वं च सत्वेनाविर्दधाति। दधाति च छायामाग्नेयीम्। सुरभिश्च सौरभेण पङ्कजवनस्य, त्वरितया विलासवत्या च गत्या प्रचरति। सप्तधा प्रकृतिषु शुद्धैव सत्वप्रकृतिः। प्राणमपि तमेव प्रधानमाङ्गिकं स्पष्टयति। एवमेभिः शुभलक्षणैरक्षीणस्पृष्टिरसावर्हत्यधिरोढुमारूढिनिर्व्यूढस्य स्वामिनः। तद्देव! कौतुकादधिरुह्य वाह्यतामियम्। धारा हि याः किल विपश्चिताः पञ्च तास्वेकैका त्रिधा प्रकीर्तितेति सम्यक् निरूपय प्रथिताश्ववारधौरेय!, तासां क्रमं पञ्चधा मण्डले तु तथेत्युपदर्शय प्रकर्षात् भो! वाहविद्ययोपहसितरेवन्त!, विधिं वाहनस्य षड्विधं च धरणीन्द्र! सूत्रय, त्रिधा च वीथी तस्यामुचितक्रमेण वेगमारोपयतु वाहनविधिविशारदो देव इति आदराद्विज्ञप्ते तेन कौतुकी नरेन्द्रः सलीलमारुह्य तथैव तां वाहयितुमुपक्रान्तवान्।

अत्रान्तरे च—

झटिति प्रधावन्नागतो दुरन्ताकूतविक्लवः, प्लावितोऽम्भसा श्रमजेन, गतिजवायासविसृताभिरनवरतनिःश्वासोच्छ्वाससन्ततिभिरन्तरितवचनवर्णपरिपाटिः, कर्मकरः करभकः—"देव! मुषिता मुषिता स्मः, पश्यतामस्माकमशक्यनिग्रहेण दुरात्मना कुतोऽप्यागत्य विध्वस्यमानमिदं रक्ष्यतां रक्ष्यतामुद्यान"मिति सत्रासगद्गदमवादीत्। विस्मयोत्सुकैरुपान्तवर्त्तिभिश्च केन रे केनेति युगपदापृच्छ्यमानो भयादनुद्गीर्णनामा तेन तेनेति जल्पन् नृपेन्द्रमहासयत्।

राजाऽपि तेन तादृशा तस्योत्त्रासवचनेन विस्मितश्चान्तः सत्वरमाहत्य जङ्घाभ्यां तुरगीमनुपृष्ठधावितैः कुमारकेसरिप्रभृतिभिरनुस्त्रियमाणमार्गः क्षणात्तमुद्देशमासाद्य पुरो निहितदृष्टिरेकहेलयैव परमितस्ततो लतामण्डपाल्लतामण्डपमुर्वीरुहादुर्वीरुहमनुसरन्तम्, अ( न्वा ) रब्धमशेषतोऽपि वनरक्षिभिः, अक्षामविक्रमं, हास्यरसमिव पार्थिवविकारेण परिणतम्, दुर्नयमिव प्रतिमया प्रतिष्ठितम्, वैरूप्यमिवानन्यरूपतया नियमितम्, चापलमिवैकवसतितया व्यवस्थितम्, कडारकान्तिभिस्तनुरुहैर्लग्नकपिकच्छुकेसरैरिवोपजातकण्डूतितया सततमङ्गेषु कण्डूयनस्वभावमुपशीलयन्तम्, चापलदुरुध्यमान्दोलितचन्दनमहीरुहतया चलितशिखरशाखाग्रविघटितेन क्रोधात्पश्चाङ्गागलग्नेन गोधूमरोचिषा भुजङ्गमेनेव पिङ्गत्विषा लाङ्गूलदण्डेन भ्राजमानम्, फालवशामिलितबिम्बीफलपाटलरसेन लिप्तया वदनसम्पदा दशनदलितकुम्भकर्णनासासृजा प्लावितमुखं सुग्रीवमिव दृश्यमानम्, पाकारुणगभस्तिनि नारङ्गफले प्रसारितकरं शिशुभावचापलाद्बालरविबिम्बमाकर्षन्तं हनूमन्तमिव प्रतीयमानम्, इतस्ततो दृष्टनष्टतया रणरसोच्चचापलं नीलमिवोपलक्ष्यमाणम्, प्रेङ्खता जात्यकनकदलोद्योतदीप्रेण प्रभापिण्डेन जलदषण्डात्तडिल्लोलमिव श्यामलतमालशिखराच्चम्पामधः क्षिपन्तम्, तारकवतश्च गगनादुल्कापुञ्जमिवोद्बुद्धमाधवीमण्डपात्फालेन निःसरन्तम्, क्वचित्कपिशेन वपुषा परिणामपिङ्गलं फलमिव पनसतरुस्कन्धेषु लम्बमानम्, क्वचिद्यावकरुचा वदनबिम्बकेन फलर्द्धिमेकोत्तरां दाडिमीविटपेषु दर्शयन्तम्, क्वचित्कपिलोत्फुल्लरोमशया लाङ्गूलश्रियाकपिशकेसरविकस्वरां मञ्जरीमिव लतामण्डपेषु सूत्रयन्तम्, हरजटाग्रपिङ्गलया प्रज्वलन्तमिव देहत्विषा, प्रचलदखिलाङ्गभागेन उत्पतन्तमिव चापलेन, फलग्रहोदञ्चितकरेण विस्तरन्तमिव दुर्नयेन, रक्षिजनकदर्थनोपकल्पितेन हसन्तमिव दन्तनिष्कर्षणेन, विदूषकमटवीचरपात्रेषु, विटंकान्तारनगरेषु, भोक्तारमारामग्राम्यफलानाम्, प्रसादचिन्तकमनोकहश्रियाम्, बिभीषिकाप्रभेदमिव वनदेवतानाम्, हास्यपात्रमिव महीभृताम्, उच्चासनप्रियमिव तरुशिखरोपवेशिनम्, नियमवन्तमिव फलाहारिणम्, महाकायमद्भुताकारभासुरमतिजवं प्लवङ्गमद्राक्षीत् ।

दृष्ट्वा च साश्चर्यम् अहो महत्वमङ्गानाम्, अहो भासुरत्वमाकृतेः अहो चतुरता चैतन्यवृत्तेः, अहो शक्तिरगम्यफलादानस्य । यथास्य तिर्यग्जातावप्येष मानुषसधर्मा व्यापारः, यथा प्लवगजन्मनोऽपीदृशमभीरुत्वम्, यथा

रक्षकचमूविमर्दकमिदं च सामर्थ्यम्, तथा तर्कयामि केनाप्यन्तस्तिरोहिताकारेण वस्त्वन्तरेणामुना भवितव्यम्। ये हि रामायणे सुग्रीवनलनीलाङ्गदप्रभृतयो दिव्यांशवन्तः श्रूयन्ते, ते किमन्यादृशाः केचिद्भविष्यन्। अथवा मध्यवर्त्ती तेषामेकोऽद्यापि हनूमानास्ते । स यद्यसावमीभिरनन्यशक्तिभिश्चेष्टितैर्भवति तद्भवति। भवतु, सामर्थ्यमेव ज्ञापयिष्यति यः कश्चिदयमिति। दृश्यतां तावदिति चिन्तयन्नभिमुखमुपागतेन तदुपसाधनानुबन्धभावनानुविष्टेन विज्ञप्तो वसन्तशीलेन देव ! कुतोप्ययमेवमागत्यागत्य प्रतिदिनं वनरक्षिपुरःसरानस्मान्न किञ्चिदिव मन्यमानो नवपाकमधुराणि नाभिवाञ्छितफलानि सर्वतो विलुप्य स्वयमनास्वादयन्नयते ! कुत्रचिद्याति किलाद्य निगृह्यते श्वो निगृह्यत इति न गतो गृहीतुमस्माभिः । अद्य पुनः प्रसङ्गसमागतस्य देवस्यापि ज्ञापितमित्यादिवचनादधिकवर्धिताद्भुतरसो राजा तं स्वयमुपक्रान्तवान्।

अथ सोऽपि—

वालरविरक्तवदनः सकपदमाच्छिद्यनिर्गतोविपिनात्।
दुर्वासर इव भूभृत्युपस्थिते शुभदशाप्रतिमे ॥

ततश्च—

उत्क्षेपणन्यसनशौण्डपदक्रमेण
पूर्वाङ्गमुन्नतमनुन्नतिमच्च कुर्वन्।
पश्चान्मुहुर्वलितकण्ठमकुण्ठवेग-
मत्रात्र दृष्ट इति निस्सरति प्लवङ्गः ॥

राजा तु तेनोद्यानविप्लवक्रोधेन क्नु पुनरसौ किमर्थं च स्वयमनुच्छिष्टानिफलान्यादाय यातीति महता कौतुकेन च प्रेरितो झगिति दत्वा कशां तुरङ्ग्याः साग्रहं पृष्ठतो दधाव । क्षणाच्च स तथाऽतिसत्वरं विनिस्सरन् कपिरित इतोऽयं प्राप्यत इति सप्रत्याशमनुसरन्तमनुमार्गलग्नैश्च कुमारकेसरिप्रभृतिभिः स्तोकान्तरमनुसृत्य चरणगतिवेगभङ्गतया स्थितैस्ससमुज्झितमेकाकिनं नरेन्द्रमतिदूरमाचकर्ष।

तथा सुदूरमाकृष्टो व्रजन्राजा तमतिवेगलाघवानुकृतस्फारुताङ्गजं प्लवङ्गमनुसरन्त्या मुखादवगलन्तीभिरतनुफेनवल्लरीभिरतनुवेगोज्झितस्य पश्चादागच्छतो मरुतः पन्थानमिव( चि )ह्नयन्त्याः, परस्परमुभयोः स्पर्धयेवाग्रमग्रमनुसरतोरग्रचरणयोर्द्वयेन समागतां ककुभमधि प्रधावन्त्याः, रयातिरेकमाकलय्य

तुरङ्गयाः सकौतुकमहो किमियमुत्पतिता वियत्पथेन याति, किमुत्क्षिप्य केनाप्यदृश्यमूर्तिना नीयमाना तिष्ठति, किमेतदङ्गसंक्रान्तः कश्चित् छद्मवानेवं प्रसर्पति, किमीदृशमेव जवस्वरूपमस्या इति बहुवितर्कव्यग्रतया मुहूर्तमकृतावधानः सहसैव परमनेकतरुशाकुन्तकूजितारावतुमुलैरुद्बोधितेन मनसा दत्तदृष्टिरकस्मादात्मानमेकत्र महावने पतितं व्रजन्तमद्राक्षीत्। वीक्ष्यते यावत् तावत्स खलु महीध्रमेदुरो नास्ति शाखामृगोऽपि, अग्रे केवलं निवारयितुमिवाग्रतो गमनमन्तरे स्थितम्, छलितविन्ध्यगिरेरगस्त्यस्य रोषाद्वर्धितमिव पिधाय दक्षिणां ककुभमवतिष्ठमानमेकं गौरीतपश्चरणपञ्चाग्निना विलीनतुहिनं हिमाद्रिमिव, हरपदस्पर्शप्रभावादपगतस्फटिकपाण्डुकुष्ठम्, कैलासमिव, वार्धकेन गलितकाञ्चनच्छविं सुमेरुमिव, अदभ्रशिखरकृताभ्रं भूधरमपश्यत्।

उपजातविस्मयश्च त्वरितमाकृष्टरश्मिवलयो विधृत्य तुरङ्गीमुपसृत्य च घनच्छायातिशीतलं तलमनोकहस्य श्रमभरातिमन्थरया दृशा निरूप्य सन्निवेशमशेषतो दिशां सम्भ्रान्तहृदयश्चिन्तयाञ्चक्रे—अहो! काहमिह महावने पतितः, कतम एषोऽपि ब्रह्माण्डफलककीलको विसङ्कटः सानुमान्, क्व सोऽस्मदवनीप्रवेशः, क्व ते कुमारकेसरिप्रभृतयः सहायाः, कियन्तमध्वानमियमुल्लङ्घितवती महाजवा तुरङ्गी, न चैतस्या वेगलाघवमिदमदृष्टपूर्वमालोचयता व्यग्रेण मया समुपलक्षितोयमुज्झितस्वीकृतो भूविभागः, क्व चासौ कपिर्यदर्थमनुपृष्ठधावितोऽस्मि, किमदृश्यो भूत्वा क्वचिद्भूतः, किमिह मायाविना तेनाहमाकृष्य छलादानीतः, करिष्यति वा किञ्चिदुपरिष्टादन्यदप्यसौ, किमियमित्थं प्रवृत्तिः किञ्चिन दर्शयिष्यति कर्मणोऽनुरूपं फलम्, किमेवमीदृग्विधं प्रातिकूल्यं वा विधेः, इदानीं किमत्र क्रियते, किमु व्यावर्त्य तुरगीं पश्चाद्व्रजामि, किमग्रेतनीं भुवमनुसरामि, किमिहैव तावत्तं हताशमदृश्यीभूतं वनौकसमन्वेषयामि, यदि तावदियमीदृग्विधा ललितैव तुरङ्गी ततो मे न दूरं निजनिवासनगरं संप्राप्तिः (सुं?) स पुनरास्पदं महाद्भुतस्य कथमवेक्षितव्यो वलीमुखः, यद्वा सर्वेऽपि परमघर्मार्तिभृतः पिपासिताश्च नितान्तशीतलमतिस्वादुसलिलमुपकूलफलवदवनीरुहं जलाशयमधिश्रयन्ति तत्तमहमाश्रयामि, तत्रापि यदि नैष प्रत्यक्षतामेष्यति ततः किमनेन, मनः प्रवृत्तिरेव कौतुकमकौतुकञ्च कल्पयति, तावत्खरातपसमयसर्पणश्रमकदर्थितामिमां तुरङ्गीमात्मानं च जलाद्युपसेवनैरुपजनितसौष्ठवं विधाय कालोचितं करिष्यामीति निश्चित्य चलितस्ततो द्रुमतलात् समंधरप्रचारमितस्ततो निभालयन्नातिदूरमा-

नन्दजनितकूजितारावमुखरैराख्यातविषय इव हंसादिजलपक्षिभिः, अनिलान्दोलितशिरोभिः संज्ञितजलाशय इव तरुभिः, अभिमुखसमागतैश्च कृताभ्युत्थान इव साम्भोजसौरभैर्वायुभिरुद्भूतनिश्चयः सप्रमोदमनुससार तां दिशम् । अग्रे च तस्यैव भूभृतो मेखलायामत्यन्तशीतलाभोगं प्रभेदमिव हिमस्य, संस्कारमिव चन्दनस्य, परिणाममिव चन्द्रमसः, सन्तानमिव शीतकालस्य, राज्यभ्रंशमिव निदाघस्य, सञ्चिताम्बुसर्वस्वं कोशमिव वर्षागमस्य, सुस्वादुजलमयं रूपान्तरमिव समुद्रस्य, विविधोर्मिचमूचलनदुस्तरं चक्रव्यूहमिव वरुणराजस्य, यमलजातमिव द्वितीयं मानसस्य, वर्तुलिमशालिना पालिवलयेन ठकारमिव महीमातृकायाः, निरालम्बनतया झगित्येकत्र पुञ्जीभूय निपतितं भरमिवाभ्रगङ्गायाः, धर्मोपमर्दरौद्रस्य कलेः प्रसरमालोक्य मन्त्रयितुमेकान्तमिलितानां मन्दाकिनीस्रोतसां त्रयमिवाबद्धमण्डलीरूपेणोपविष्टम्, सुरपतिफणीन्द्रयोरुत्पन्नविवादे पाताललोकादाकृष्टमन्तरालेविमुक्तममृतकुण्डमिव विस्तीर्य जगत्यामास्थितम्, शैत्याभिलाषपतितयेव छायया तटतरूणाममुच्यमानशीतलतरङ्गम्, तरङ्गसंगतालम्बिशाखाग्रपल्लवमुखैः स्वादुताप्रलुब्धैरिव तीरशाखिभिरनवरतमापीयमानसलिलम्, क्षारसागरजलोद्विग्नैः सुधामधुरवारिग्रहार्थमापतितैरभिनवाभ्रपटलैरिव पृथुभिरम्भोजिनीदलैः समन्तादा(वृतम्, )सुनिर्मलाम्बुतया प्रतिबिम्बितेषु बहुपदार्थेष्वेकतः प्रतिफलितमूर्तिना गगनपिधानकेनेवाल्पकत्वादन्तःपतितेन महत्वमद्भुतं बिभ्राणम्, अन्यतस्संक्रान्तबिम्बया परिसरविलीनवनराजिरेखया विततवाडवधूमच्छटाङ्कितक्रोडमपरमष्टमं पयोधिमिव प्रतीयमानम्, अपरतः प्रबुद्धविशदारविन्दप्रतिबिम्बैरातपत्रैरिवातपाद्रक्ष्यमाणसैन्यमन्तर्निवासिनं वरुणमाविर्दधानम्, शतशः प्रतिबिम्बितैश्च पृथुदलस्तबकपूरितमौलिभिस्तटतालशाखिनामाकारैरमृतकुण्डधिया पातालान्निस्सरद्भिरनेकफणैर्भुजङ्गैरिव भ्राजमानम्, अनिलतरलिताविरलशीकरनिर(न्तर)दुर्दिनोत्सवपदं चातकानाम्, कमलसौरभसुगन्धितं विलासभवनमिन्दिन्दिराणाम्, विकसित बहलकुवलयान्धकारसंबलितं संङ्केतकं सारसद्वंद्वानाम्, सुस्वादुशीतलजलं प्रपासत्रमटवीचराणाम्, सिद्धनवमृणालादिकन्दकमनीयं रसवतीस्थानं कलहंसवयसाम्, कमलपरिमलमिलितालिमण्डलमनोहरं धृतमेघडम्बरातपत्रमिव जलाशयैकाधिपत्येन, क्रीडन्मकरपुच्छाच्छोटनसमुत्थितोदच्छटं समुत्तम्भितपताकमिव जलोभेकेन(द्रेकेण,?)बहलकल्लोलतरलं कम्पमानमिव शैत्येन, तटान्तमिलितडिण्डीरवल्लरीप्रकटमायातपलितमिव

महत्तरत्वेन, निर्मुद्रमपि मुद्रितोपकण्ठं श्वापदपदैः, दुस्तरमपि तीर्यमाणं तरङ्गैः, अस्ताग(अगाध?)मपि लब्धमध्यं पयोभिः,अमलमपि मलिनमिन्दीवरप्रभाभिः, पवित्रतोयमपि मिश्रितमरविन्दमम्बु(धुबिंदु ?)भिः, क्वचिज्जलदेवताञ्जनकूपिकाभिरिव दन्तुरं कुवलयकलिकाभिः, क्वचिद्वरुणवाराङ्गनाशृङ्गारयावकक्षेपपात्रैरिव पाटलमुन्मिषितरक्तोत्पलैः, क्वचिद्वारिलक्ष्मीनिमन्त्रितानीतनववधूवरैरिव पिञ्जरं चक्रवाकमिथुनैः, क्वचिच्चटुलवल्गिभिश्चलदिव जलकुक्कुटकुटुम्बकैः, क्वचिद्धवलकान्तिभिर्हसदिव चकोरपेटकैः, क्वचिन्मसृणवाणिभिर्जल्पदिव कुररसन्दोहैः, क्वचिद्दीर्घमाराविभिर्गायदिव कुमुदषट्पदैः, उल्लसता जलेन द्रावयदिव मेदिनीम्, उत्फालशालिना तरङ्गचक्रेणाक्रामदिव दिशः, समुत्पतता शीकरकदम्बकेन व्याप्नुवदिवान्तरिक्षम्, श्रुतमेव तापापहारकम्, दृष्टमेव तृष्णाहरम्, जलकुञ्जैरप्यनासादिततलम्, लहरीभिरप्यदृष्टपारम्, अपारमसरत्नुपनीरसम्भृताङ्गं तडागमद्राक्षीत् ॥

उद्वेल्लन्नवनीरजव्यजनकव्रातोदराकर्षितं
यत्रातिस्थिरगन्धवाहतुलितं गन्धं गृहीत्वा नवम् ।
भृङ्गास्तत्क्षणलब्धसौरभरसादुन्मादवन्तो भ्रम-
न्त्यग्रेऽग्रे नलिनीश्रियः कृतरवं ग्राम्या भुजङ्गा इव ॥

अपि च—

यत्र—

पूगीवलयवल्लाले गर्भे ( लीलागर्ते ? ) रङ्गे स्थिता इव ।
खेलन्ति लहरीदण्डैर्दण्डरासमपां श्रियः ॥
तदवलोक्य झगित्युपनतवितर्कश्चिन्तयाञ्चक्रे ।
व्यावृत्त्य ध्रुवमागतः स भगवान्भूयोऽप्यगस्त्यो मुनि-
स्तेनैते चकिता इवोर्मितरलाः सर्वाऽपि वाराशयः ।
अत्रागाधगभीरगर्भगुरुणि स्वैरं प्रविश्य स्थिताः
पालीपिण्डमिषेण पूर्णवचनो विन्ध्यश्च वृद्धिं ययौ ॥

इत्येवमनुचिन्त्य सहर्षमाप्यायितमनाः सरभसमुत्तीर्य विसृज्य पर्याणमुल्लोठनस्नपनजलपायनादिभिः सन्तर्प्य च सङ्कलय्य लतावल्कलेन तुरङ्गीं नवहरितदूर्वाङ्कुरमनोहारिणि परिसरे स्वैरं चरन्तीममुञ्चत्। स्वयं च तुरगीखुरशिखरखण्डिताध्वधूलिभिराधूसरं प्रक्षाल्य चरणयोर्युगलम्, आकृष्य च स्वयमम्बुजादिजलजकुसुमैश्चकार माध्याह्निकीं देवतोपास्तिम् । अनन्तरं

चाभ्यवहृत्य प्रत्यग्रसरसानि मृणालीकिसलयदलानि तीरतरुलताफलानि च पीत्वा च तरुच्छायातिशीतलं सलिलम्, आसन्नवर्त्तिनः शाखासन्दोहबहलस्य तमालविटपिनो मूलवर्त्तिनीमनुसृत्य च छायामुपाविशत् ।

उपविष्ट एव च हृदयीकृत्य तं वलीमुखमशेषतो जलावतारवर्त्मसु तटतरुशिखरेषु लतान्तरेषु गुल्मसन्धिषु कन्दरदरीमुखेषु च प्रहितचक्षुरालोकयत् । कियन्तं क्षणमतिक्रम्य मनस्यकरोत्—अहो न तावदिह दृग्विषयमागतोऽसौ दुरात्मा कपिः, कान्तारमिदमसञ्चारगोचरं च मानुषाणाम् । तथाह्याश्रयोद्देशलेशोऽपि न क्वचिदालोक्यते प्राणिनाम्, प्रायःश्वापदान्यपि न नाम सञ्चरन्तीह दुर्वने, तत्किमेवमत्राऽऽसितेन, तेऽपि कुमारकेसरिप्रभृतयः क्व स्थिताः, क्व किलास्माननुसरिष्यन्ति, क्व चान्वेषयिष्यन्ति, क्व वा भ्रमिष्यन्ति, किं करिष्यन्ति, कथं वर्त्तिष्यन्ते तपस्विनः, तद्यदि प्रीतिमुपगतेयममुना सरसदूर्वाहारचारेण तु(र) गी, ततो व्याघुट्य पृष्ठतो व्रजामीति संचिन्त्य तदभिमुखं निक्षिप्तचक्षुरकस्माच्चरन्त्यास्तस्याः पूर्वचरणयोरग्रवर्त्तिनमुल्लसितमांसलमरीचिवल्लरीपरीतपुलिनपद्मम्, पुष्पमिव विद्युल्लतायाः, गुच्छमिवाशेषप्रदीपकलिकानाम्, नभसः पतितं गर्भाण्डकमिव भगवतः पतङ्गस्य, ज्वलन्तं चितापुञ्जमिव निशातमिस्त्राणाम्, रविणा परिगृह्य सुभगीकृता द्यौरियमितीव स्पर्धया धरित्रीं स्वीकर्त्तुमागतं, पुरः सौरभ्यलोभागतैः कणत्षट्चरणचक्रैरालोकविदलनापराधभीतिसङ्कुचितैरिव तमिस्त्रपटलैः प्रसाद्यमानम्, अतिस्वच्छतयाऽन्तर्दृश्यमानव( गि? ) लितानु(न्ध?)कारशकलानीव संक्रान्तासन्नविटपदलबिम्बकान्युद्वहन्तम्, अन्धकारशतैरप्यचिन्त्योऽयमिति सौख्यार्थिभिरिवाशेषतेजोभिराश्रितम्, दूरप्रसारिभिः करैस्तमालशाखान्धतमसमलिनितान्याशामुखानि क्षालयन्तम्, सर्वतोविजृम्भितेन तेजसा सकलमेकभूतात्मकं जगज्जनयन्तम्, असद्भावमिवापादयन्तमम्बरस्य, निकामनिर्मलमतिमनोहरं मणिमपश्यत् ॥

दृष्ट्वा च विस्मितेन म(न)सा समन्ताद्दृष्टिक्षेपैर्नकोप्यस्तीति दृढं निश्चित्य ननु क्वायमिह स्वधामगरिमगौणीकृताशेषरत्नजातिरपूर्वोमणिः, कथमिदं सर(स्तीर)मनुप्राप्तः, कुतश्चैवमवभ्रंशदुस्थितिरभूत्, नियतमयमनन्तैर्मरीचिभिः सदैवाप्रहतेन च महसा (सहस्र)करमिष्टितं(मितं?)त्रियामास्तमिततेजसं भगवन्तमपि द्युमणिमतिक्रामति, निर्मलतयाऽवकृष्टलाञ्छनं कौस्तुभमतिशेते, किं च निष्कोपतया मुनीन्द्राणामपगतत्रासतया च सुराणां स्पर्धते मनोभिः, अपिचामुना जितप्रभः कौस्तुभो लज्जित इव वनमालापगूढमसितप्रभान्धका-

रितं हरेर्वक्षस्थलमधिष्ठितः, चिन्तामणिरप्यनेन सादृश्यमात्मनोऽभिवाञ्छन्निव दानादभीष्टं फलमित्यर्थिनां चिन्तितार्थदाने प्रवृत्तः, अन्ये च मणयः प्रभापराभवभयेनेव, केचिदगाधाम्भोधिमध्यवर्त्तिनो नाविर्भवन्ति, केचिदाश्रितरोहणाद्रयः समन्तादात्मानमतिप्रभूतया मृदा प्रच्छाद्य तिरोबभूवुः, केचिच्च रसातलं प्रविश्य फणीन्द्रफणापञ्जरमधिश्रितवन्तः, किमिह नाम स्नात्वा निर्गच्छतः कस्यापि विस्मृतः, किमम्बरे विमानगामिनो जनात्परिभ्रष्टः, किं वाऽन्यतः केनापि वन्यप्राणिना पक्षिणा वा कुतश्चिदाहृत्यात्र निक्षिप्तः, यथा च मधुव्रतोपसेव्यमानबहलपरिमलोद्गारवाही सिन्दूराङ्कितश्च क्वचित्तथा तर्कयामि सौरभ्यसम्भृताङ्गावयवसङ्गिन्यलङ्करणे कस्याश्चिदङ्गनाया विभूषणमसौ तदेनमादाय पश्यामीति परामृश्योत्थातुमिच्छो राज्ञः समीपं सखलु कथञ्चन तत्खुरप्रहतिवेगादुच्चलितो मणिरग्रे पपात ॥

सा च परं तेन मणिस्पर्शप्रभावेण झगिति तुरङ्गयारूपमुज्झित्वा तदेव जटावल्कलोपवीतधरं शरीरमावहन्ती तारावली बभूव । राजा तु तं प्रभावभूयिष्ठं मणिमात्मनोऽग्रे पतितमालोक्य ननु कीदृगिदमिन्द्रजालसोदरं कुतूहलमिति विसर्पता विस्मयेनाकृष्ट इव तस्मान्मणितो निवर्त्य निश्चलेन चक्षुषा रूपान्तरेणोज्झितामभिनवामिव तारावलीं द्रष्टुमारेभे । साऽपि स्वमूर्तिलाभरभसितमात्मानं विभाव्य तेनाद्रिणा सरसा च निरुद्धमध्यं तन्महारण्यमितस्ततो विस्मिता निभालयन्ती सरभसमेकहेलयैव विनिहितविलोचना साधु साधु चिरादनुगृहीताऽहमभीष्टघटनया देवताभिः । कुत्रेह क्रूरवनचरावतारदारुणारण्यसरसस्तटे त्रिभुवनश्रियः सीमन्तरत्नमित्थमनुचितावस्थानदुःस्थितमभूदित्यालपन्ती दूरतोऽपि प्रसारितकरा त्वरितमद्रेरभिमुखी दधाव ॥

राजा तु तथा प्रवृत्तायां तस्यां सवितर्कमहो कोऽयमालापस्यान्यथावृत्तिरूपक्रमोऽमुष्याः । मणिरसौ ममाग्रे तिष्ठत्येषा तु धाविता सन्मुखी शिलोच्चयस्येति विस्मयात्तत्रैव यावन्निरूपयति पङ्कजदलायतं चक्षुस्तावदादौ यस्मिन्नकिञ्चिदेव गिरेर्भित्तिमात्रकमेव केवलमालोकितं तत्र परमकस्माद्भूमीध्रगर्भे विचित्रनवरचनामनोहरं माणिक्यमणिमन्दिरमपश्यत् । तस्माच्च मत्तकरि(परि)चितया गत्या सलीलं निःसरन्तीम्, अनुहरन्तीं च तमेव चित्रप्रपञ्चितं रूपम्, आप्यायिकां दृशोः शशिबिम्बदलोपरचितामिव चन्दनकरम्बितामिव कर्पूरपिण्डितामिव कमलमसृणितामिव सुधोपशालितामिव मूर्तिमुद्वहन्तीम्, नखकुसुमशोभितया चरणपल्लवश्रिया लतामिव सौभाग्यभूमावुद्गताम्, ऊरुस्त-

म्भवतीं चित्रशालिकामिव रतिनिवासाय कल्पिताम्, जघनचक्रोपराजितां कर्मशालामिव कन्दर्पकुलालस्य विश्रुताम्, गभीरया नाभ्या मूषावतीं वातिकि(गे?)न्द्रविद्यामिव शृङ्गाररसमादधानाम्, वलित्रयतरङ्गिणीं सरितमिव सौन्दर्यदेशान्तर्विस्तृताम्, सुवृत्तपीवरेण (स्तनयुगलेन) माणिक्यनायकवतीं रत्नावलीमिव त्रिभुवनश्रियः, नयनशफरोत्फालवतीं वेलामिव लावण्यसागरस्य, भ्रूचापलवलयिनीं वीरवृत्तिमिव तारुण्यसुभटस्य, मुखसरोजसुन्दरां पद्मिनीमिव ब्रह्माण्डसरोवरस्य, विधिना निर्माय त्रिभुवनमनोहरामिमां मा कोऽपि द्रक्ष्यतीति गोपायितुमिवारण्यगह्वरे विमुक्ताम्, मृणालिकाभरणां जलदेवतामिव कौतुकात्स्थले सञ्चरन्तीम्, करकलितलीलाम्बुजां लक्ष्मीमिव कमलवनात्क्रीडया भ्रमन्तीम्, कुसुमोत्तंसभासितां वनश्रियमिव शैत्याय सरस्तटे पर्यटन्तीम्, निर्माणसर्वस्वं भव्यतायाः, धारागृहमतुच्छकान्तिच्छटानाम्, फलं कन्दर्पकुसुमस्य, तीर्थं लावण्यसलिलस्य, पात्रं शृङ्गाररसस्य, मदनार्त्तिदशाजाड्यपाण्डुरं गण्डयोर्युगलमादधानाम्, तारावलीसम्मुखमालिङ्गनसमुत्सुकामायान्तीमुदयसुन्दरीं ददर्श ॥

दृष्ट्वा च सचमत्कारमारमाधूतमौलिः—अहो साध्वभिहितवती यथार्थवचना तारावली, सत्यमेव त्रिभुवनश्रियः सीमन्तरत्नमसौ मृगाक्षी, मुधैव मया धारितोऽयं मणिः । किं च यथाऽऽख्यातं कुमारकेसरिणा यथा दृष्टं च तत्र पटे तथाऽभ्यधिकमेव रूपं तस्याः । किमुच्यते ।

तथाहि—

निक्षिप्तमम्भोजभवेन रूपसर्वस्वमस्यामिति तर्कयामि ।
कुतोऽन्यथा कार्मुकपाणिरेव जागर्त्ति रक्षार्थमिवाङ्गजन्मा ॥

अथवा—

सा श्रीरियं खलु यया जन एष याति-
हाराद्यलङ्कृतिविकस्वरमीश्वरत्वम् ।
दृष्टिः प्रहर्षजलबिन्दुमिषादतोऽभू-
देनामवाप्य नवमौक्तिकभूषणा मे ॥

किं बहुना—

यत्संलीनमनिद्रचम्पकदलच्छायाभिरामद्युता-
वेतस्यां किल मे प्रसूनधनुषो रागेण रक्तं मनः ।

तेनैवारुणरत्नशारतरलेनैवान्विता काञ्चनी-
भूषाऽभूद्भितस्त्रयेऽपि जगतामन्त्वे(मेषे?)ति मे निश्चयः ॥

अहो यत्किञ्चन वैधेयता विधेः, अहो प्रभावः कर्मपरिणतीनाम्, अहो विचित्रता संसारस्य, येनेयमीदृग्विधाप्याकृतिरिदं वनवासक्लेशमनुभवति। येनेयमित्थमरण्यमध्यास्ते। तारावली च तुरङ्गीरूपमनुप्राप्ता। तत्सर्वमुभयोरन्योन्यप्रश्नाद्नेनैव तरोः प्रकाण्डेनान्तरितः शृणोमि तावदिति विनिश्चित्य तथैव तस्थौ ॥

उदयसुन्दरी चिराद्चिन्त्यघटितसङ्गमप्रमोदोल्लोलतरलितां त्वरितमायातवतीं तारावलीमुद्भूतरभसं प्रगाढमालिङ्ग्य विस्मयोत्सुकया च तया तथा वनावस्थानव्यतिकरमापृष्टा बहुविरहदुःखभारापसर्पणादाश्वसता हृदयेनैकतो भूत्वा छायावति द्रुमतले निषद्य स्वहृदयदुःखप्रकारमब्रवीत्—प्रियसखि न किञ्चिज्जानामि तदा तस्मिन्सौधशिरसि तथाऽनङ्गजनितार्त्तिजागरस्यान्तराले मूर्च्छया सुप्तेव सपदि विध्यातचेतना परमिह सरस्तटे विबुद्धमपूर्वेण चूडागतेन दिव्यमणिना विभूषितमनुगतश्चैकेन महादेहदारुणेन कपिना पश्याम्यात्मानम्। अनन्तरमुत्त्रासतरलेन चेतसा ननु काहमिह क्व तन्नवकमलनीदलास्तरणशीतलं सौधशिरो यत्र किल सुप्ताऽस्मि, क्वासौ तारावली या न दूरमासीच्छयिता, क्व च वयस्यजनो यः पालितनिजक्षणः त्वरितमुपस्थेव मां परिवृणोति, क्व तौ पितरौ यौ प्रातरुत्थिता पश्यामि, क्व तच्च कन्यान्तःपुरं यस्मिन्नभितोऽपि तानि प्रभातमङ्गलोपगीतगर्भितानि प्रबुद्धपरिजनारावाडम्बराणि श्रूयन्ते। हा हतास्मि दुरपसदेन विधिना, कीदृगिदमरण्यम्, अवनीधरश्च कोऽसौ, कतममेतत्तडागम्, कश्चायमासन्नवर्त्ती कपिरिति सप्रकम्पमशेषतो विलोकयन्ती जानामि मामाकलय्य स खलु मनुष्यशेमुषीकः प्लवङ्गमो झगित्युत्थाय तस्मादिहपरतो निबिडतरुलतास्तम्बडम्बरवता निकुञ्जेनान्तरितामिन्द्रनीलमयीं भुजबलेनाकृष्य भूभृतो भित्तिमपसारयामास। मध्ये च तत्रेदमन्तःप्रगुणितावस्थानतल्पं माणिक्यभवनमास्ते। तच्च मे निवासाय कल्पयन्नागत्य मां चरणसंवाहनादिभिरपभयां विधाय विहितसुखसूचकोपचारमिहोपवेशयाञ्चक्रे ॥

अनन्तरमुच्चित्य तटोपवनाद्विटपतरुलतापुष्पाण्याकृष्य च सरोगर्भात्कमलकुवलयानि निक्षिप्य पृथुनि कदलीदले भूयश्चरणसंवाहनमकरोत्। तेनावबुद्धतदीयहृदयाऽहमुत्थायात्र सरसि कृत्वा स्नानं तेन कुसुमोपकरणेन यथा-

क्रियमभीष्टं दैवतमपूजयम्, आगता च तथैव माणिक्यभवनगर्भमित्थमेतेन प्रगुणितैरनेकनवपाकशालिभिः फलैराहारमकार्षम्। निर्वर्तितदिवसकृत्यायाः सुखनिषण्णायाश्च तल्पतले मम स्वयमसौ कपिरविरतं द्वारि स्थितो रक्षामकरोत्। एवमन्यदाऽपि यदा तु कंचित्फलादिकमाहर्तुमुपयाति तदा तामेव गिरिभित्तिमनन्यगम्यां पिधानं दत्वा मद्भवनमन्येषामलक्ष्यगोचरं विधाय प्रयाति। न चात्र दुरन्तवनगह्वरे पतिता दिङ्मोहवह्लुलिता क यामीति जानामि। नापि तस्य कपेः सकाशात्पदात्पदमपि गन्तुमन्यतः प्राप्नोमि। तेन च बलवताऽधिष्ठितमिदमरण्यमालोक्य सर्वेऽपि वनप्राणिनस्त्रासेन सुदूरमुज्झाञ्चक्रुः॥

तेनैवं काननेऽस्मिन्ननिलरविकरस्पर्शमात्रोपसर्प-
त्सम्पर्कं पाल्यमाना विगुणदिनदशादुस्थितिं प्रे(ङ्खु?)यन्ती।
पञ्चेषुप्लोषपीडामिह सरसि बिसाम्भोजसेवोपचारै-
(रारब्धै)र्मन्दयन्ती विधिललितमितोपीक्षमाणा वसामि॥

कः पुनरसौ कपिः, केन वा निरूपितः, किंहेतुकश्चायमीदृशोऽस्य मदङ्गपरिपालनक्लेशः, कथमहमिहागतेत्यादि न ज्ञातम्। अद्य पुनः स्नानक्षणे स चूडामणिरादाय यथैव मया समयातिक्रमसमुत्सुकया शिथिलग्रन्थिबन्धमुत्तरीयाञ्चले बद्धस्तथैव देवमभ्यर्च्य त्वरागमनव्यग्रतया विस्मृतस्ततो वसनाञ्चलाञ्जिजाङ्गभारेण विच्युतग्रन्थिरपतदत्र कुत्रापि। स्मृतश्चेदानीं तेन शून्यं सीमन्तकास्पदं गतेन कथञ्चन पाणिना। तमन्वेषयितुमदूरमित्यनुत्थापयन्त्येव कृपया तमनुगामिनमद्य केनापि दूरात्खेदितमिवाथातमतिश्रमेण निद्रागतं वनौकसमेकाकिनी समुच्चलिताऽहमिह। त्वमपि प्रियसखि संक्षेपतः कथय तारावलि मद्वियोगकृतो वासरादारभ्य समस्तं वृत्तान्तमात्मनोऽपि जटावल्कलपरिग्रहमश्वभावमिममिहागमनं च। स किं दृग्विषयमागतस्ते कुतश्चिदियता कालेन मम मदनार्त्तिहेतुर्युवा न वेति ससम्भ्रमं पृष्टा तारावली तत्सर्वमदर्शनक्षणात्प्रभृति निजं वृत्तान्तमारभत निवेदयितुम्॥

सखि श्रूयताम्। उदयसुन्दरि तदा शयनादुत्थाय त्वामपश्यन्ती नितान्तविधुराऽहमेव त्वदम्बापुरस्सरस्य स्वामिनः शिखण्डतिलकस्य ज्ञापितवती। तेन चैवमन्वेषयितुमनुप्रेषिताः सर्वतोऽपि चराः। त्वद्वियोगदुःखिताचाहमप्येवं त्वदन्वेषणकृते निर्गता गता चैवमसृग्भुजो गोचरम्। एवं ततो रक्षिता तेन तव हृदयमदनेन। दृष्टश्चैवमसावालापितश्चैवं ज्ञातश्च नामान्वयनिवासनगरसंवेदनादेवमेव च तेन कुमारकेसरिवृत्तपूर्वकमुपदर्शितः स ते जीवितं

चित्रपटः। ततः स्वामिनि ! अहं तेन चित्रपटालोकनेन द्विगुणितभवद्विरह-दुःखा त्वदनुरागविधुरितं राजानमक्षमा समीक्षितुमिति तामतिक्रम्य कृच्छ्रेण रात्रिमुषस्येव त्वदन्वेषणाय भ्रमणमङ्गीकृत्य कुसुमवाटिकायां पुष्पोच्चयमिषेण निर्गता नगरात्। अनन्तरं च तावद्बहुग्रामाग्रहारपुरपत्तनालिं प(श्य)न्ती त्वरितमन्तरालपथेन यामि यावदेकत्र मध्याह्नतरणितीव्रातपेन विह्वला श्रमभ-रालसया दृशा पुरःपुरोऽन्धकारपटलानि पश्यन्ती विश्रमितुमुद्भूतहृदया सहसैव च विदार्य गगनमुच्छ्रितेन स्खलिता क्ष्माभृतः शिखरेण स्थिता च विश्रान्ति-कृते मुहूर्तकं तत्र। तत्र च तृषा विशुष्कतालुरपेक्षया पाथसामितस्ततो दत्त-दृष्टिर्दूरादेकतः प्रतिशिखरकोणैकदेशे रहःप्रदेशवर्ति, पिहितं च घनलतागुल्म-जालिभिः, अनन्यसदृशाम्बुनिर्मलतया गरुडचञ्चुप्रहाद्विच्युतममृतं कुम्भाद्रु-तमिव विलुठितम्, ताण्डवरसविधूतित्रुटितं हरजटाग्रगङ्गाम्भसः पटलमिव निपतितम्, ब्रह्मणः कराद्भ्रष्टं कमण्डलुपात्रमिवोन्मथितम्, कल्पान्तपवनपा-तितं चन्द्रबिम्बमिव स्फुटितम्, द्रुतिविद्योपसाधितं ताराकदम्बमिव द्राविं-तम्, आपालिपूर्णमस्थूलविरलोर्मिजातमुत्तानतुण्डं तोयकुण्डमद्राक्षम्॥

दृष्ट्वा च सहर्षमहो निर्म्मोम (निस्सीम?) सृष्टिरमलभावोऽम्भसामित्य-भिलाषतरलेन चेतसा त्वरितमनुसृत्य रभसात्तदीयं करप्राप्यमचिरमुक्ता-मरीचिसञ्चयस्वच्छमतिशीतलं सलिलमापूर्णकण्ठमिच्छयाऽस्मि पीतवती। तदम्बुपानाच्च झगिति गात्रमेतदपहायामुना तुरगीरूपेण परमहमभूवम्। क्षणं च तदुपकण्ठस्थिताऽहमात्मानमनुस्मरन्ती वितर्कमकार्षम्—अये तदेतद्देहप-रावर्ति सलिलं यत्पुरा सिद्धेभ्यः कथाभिराकर्णितमासीत्, हा किमिति पिपा-सितया दृष्टमिदमभाग्यवत्या मया, दृष्टं चेत्किमिति परामृश्य नोज्झितम्, उज्झितं न चेत्किमिति त्वरितमापीतम्, पीतं चेत्किमित्यङ्गुलीनिक्षेपेण नो-द्वान्तम्, अहो विचित्रव्यसनकारित्वमनन्तशक्तेर्दैवस्य, येनाहमिदं प्रापिता दशान्तरमित्यादि चिन्तयन्ती मूले महीतलगतं विलोक्य सरसदूर्वाप्रवाल-शाद्वलं तृणस्तम्बमनल्पया विमोहिता क्षुधा तमधि झम्पामक्षिपम्। क्षिप्त-झम्पा च गता भूम्यन्तरं प्राक्चैतन्येन मुक्ताऽस्मि। ततस्तु कुत्राहमवस्थिता क्व गता क्व परिश्रान्ता केनात्र समानीता कथं पुनरागता निजप्रकृतिमिति न ज्ञातवती। केवलमिदं तु दैवानुकूल्यमभूद्यद्देवि संवृत्तः सह भवत्यास्सङ्गम इति सहर्षमुक्त्वा व्यरंसीत्॥

उदयसुन्दरी च हा हा सुहृद्दुःखिते प्रियसखि तारावलि स त्वयाऽस्म-

न्मनोविषयनायकः सम्यग्ज्ञातान्वयनामवसतिरालोकितोऽपि पुनरिदानीं दूरीकृतो दैवेन। किंच सोऽपि मदर्थमित्थमेव ताम्यन्नास्ते। क्क पुनरसावालोकनीयः कथमालोकनीयः कदा चालोकनीय इति विलप्य सविषादमुदग्रवेगवतीं मूर्च्छामगच्छत्। तारावली तु हा हा स्वामिनि! हा निजवंशवैजयन्ति! हा कन्दर्पविजयश्रीः! हा त्रिभुवनालङ्कारमुक्तावलि! किं किं किमिवाचेतनीभूताऽसि, किमद्याह्लादिनि! मृगाङ्कमूर्त्तिरिवास्तमुपयान्ती जगदप्येतदन्धकारयिष्यसि, हा हा मुषिता मुषिताऽस्मीति सेचनार्थमानेतुं सलिलमतिसत्वरं गतवती। अथ राजा नितान्तमाकुलीभूय प्रधावितो हा हा विरसपर्यन्त एष संवृत्तो व्यतिकरः। तद्यदि पुनरसौ मणिर्यथा कायपरीवर्तनविकारमपहरति तथा मूर्च्छादिव्यपायहरोऽपि जायत इत्याकूतसत्वरमुत्थाय गृहीत्वा च तं मणिं तद्गर्भितेन पाणिना सुदृढमुदयसुन्दरीं करे जग्राह।

अत्रान्तरेझगिति तस्य मणेः प्रसङ्गा-
दुच्छिन्नमूर्च्छमपमुद्रविलोचनाऽसौ।
वेगोत्थिताधृतकराग्रमनङ्गरूप
मग्रे नरेन्द्रमवनीतिलकं ददर्श॥

ततश्च—

तस्याः सोऽयमिति ज्ञाते तस्मिन्नाविरभूद्रसः।
स कोऽपि यमुदाहर्त्तुमभूज्जाड्यं विधेरपि॥

अनन्तरं च—

सा तस्य पातुमलगत्तृषितेव तन्वी
रूपामृतं नवकटाक्षमृणालकेन।
तामप्यनङ्गदहनग्लपितामदभ्र—
दृष्टिच्छटाभिरभितोऽपि नृपः सिषेच॥

ततस्तयोर्नूतनसंगमोत्सवप्रमोदलोलेव सवेगमन्तरे।
परस्पराविष्टकटाक्षसंक्रमे रतिः करोति स्म गतागतानि(वै?)॥

एवमनयोः स्नपनकेनेव मदनश्रमजलेन स्नातयोर्हस्तमेलापकेनेव मणिना सनाथकरतलयोः पार्श्वतः प्रसरता द्विजोद्घोषेण वृत्तमिवाकृतविशेषप्रक्रियोपचारं पाणिग्रहणम्। अभिनन्दितं च पवनोल्लासितानि जलोर्मिशिखरशीकराक्षतकुलानि तरुलताप्रवालकुसुमानि च सन्मुखमिवनिक्षिपन्तीभिः जलवनाधिदेवताभिः। अथ रसादुदयसुन्दरी स्वेदजलकणनिकरदन्तुरमुद्भिन्नपुलकमाकम्पं

शरीरमावहन्ती त्रपया सस्मितमवनम्य वदनकमलमहो मुञ्चत मामिति शनै-रतिमृदुमधुरमालपन्ती करतलाकर्षणप्रयासमकरोत्। राजाऽपि सहर्षमीषद्वि-हस्य बहुरसोपलालितेन मनसा सनर्मसन्दर्भमब्रवीत्।

मुधैव तन्वङ्गि सरोजसुन्दरं
(करं) किमाकर्षसि कोमलोदरम्।
स्फुटाक्षरं चन्द्रमुखि त्वमुच्यसे
चिरेण लब्धाऽद्य कथं विमुच्यसे ॥

अनन्तरमब्जिनीपलाशपुटभरितमुदकमादाय सवेगमायान्ती तारावली विलोक्य दूरादेव राजानमानन्दनिर्भरेण चेतसा तत्तथा तदीयं सङ्गममभिन-न्दन्ती साधु साधु सम्पन्नम्। अहो कुतः, कुतोऽत्र, कथमत्र, किमत्र, समस्त-जगदाजीवनैकहेतुरेकाकी देवः, इति सविस्मयोत्सेकमापृच्छ्य मनाक् तेनैव पयसा तयोरवतारणकमङ्गलमकरोत्। राजाऽपि विश्वभूतेः शिष्यागमनक्षणा-त्प्रभृत्यखिलं स्वीयमनुभूतविषयं व्यतिकरमावेदयाञ्चक्रे ॥

तदनु तुरगभावभ्रंशमूर्च्छापहार—
प्रवणपरमशक्तिख्यापनापूर्वकं तम्।
मणिमखिलमयूखोल्लेखलिप्तान्तरिक्षं
व्यतरदमृतधारास्त्राविसारस्वतश्रीः ॥

इति कविश्रीसोड्ढलविनिर्मितायामुदयसुन्दरीकथाया-
मुभयमेलको नाम सारस्वतश्रीपदाङ्कः
सप्तम उच्छ्वासकः ॥

---

## अष्टम उच्छ्वासकः ॥

अथैकमवसरे सपदि निपतदुच्चण्डह्रादिनीतडत्कारमोदरम्, दुर्दशा(र्शा?) सुरसमरसंरम्भकुपितकात्यायनीकठोरहुङ्कारदारुणम्, अक्षवधप्रधावितपवन-नन्दनोत्कलितकिलिकिलारावभासुरम्, अरिवर्गनिग्रहातिविषमभीमनिर्मुक्त-घनसिंहनादमेदुरम्, अशेषतः प्रतिशब्दिताद्रिकन्दरसरोवरम्, आकुलीकृत-सकलजलसत्त्वम्, उत्त्रासितवनशकुन्तम्, आविभ्रता चूत्कार(हुंकार?)पटलेन स्फोटयन्निव ब्रह्माण्डमण्डलम्, उदञ्चितया चपेटया पाटयन्निव नभस्तलम्, वेल्लता लाङ्गूलवलयेन रुन्धन्निव दिङ्मुखानि, रोषानलज्वलितया दृशा दहन्निव

मेदिनीम्, निष्घर्षभीषणया दन्तपरिषदा गिलन्निव जगन्ति, यावकरसानुकारिणीभिः कपोलकान्तिभिर्वर्षन्निव रिष्टरुधिरधाराभिरनिष्टदर्शनो निद्रान्तसमुत्थितः स खलु सहसैव दूरात्तारावल्याऽभिनन्द्यमानं स्वीकृतोदयसुन्दरीकमुर्वीपतिं विलोक्य निकामकुपितः प्रधावितो जवादाजगाम कुतोऽपि सम्भृतबलो गोलाङ्गूलः सामर्षो दृसञ्च प्रावर्त्तत भुजाक्षेपे क्षितीश्वरस्य ॥

अत्रान्तरे च हा हा हताऽस्मि दुरात्मना दैवेन येन जानन्त्याऽपि मया मन्मथशरव्याघातमूर्च्छितया तिष्ठन्नपि न स्मृतः, चिरादिष्टजनसङ्गमोत्सवरसेन मत्तया स्वपन्नपि न परामृष्टः, सुदूरमारूढिमता रागेणान्धया समागच्छन्नपि न दृष्टो दुष्टैकजन्मा पापोऽयम्। अहह किंप्रकाराऽस्य व्यतिकरस्य परिणतिर्भविष्यत्याः प्रियसखि तारावलि! त्वरितमास्थाय कमप्युपायमाश्रय कञ्चन कथय कस्याप्युपसरणादि कञ्चित्, अथवा हे पृथिवि! त्वमनेन सुचिरमनुपालिता किमिति स्थिरीभूय स्थिताऽसि, अहो महार्णव! त्वद्दुहितुरसौ लक्ष्म्याः पतिः किमिति जडत्वमालम्बितोऽसि, हंहो दिक्पालाः! सकलदिग्जयप्रक्रमेष्वनेन रक्षता भवन्नगरीसीमानमार्जिताः किमिति सुदूरमपसृतास्तिष्ठथ, भो भो दिनेश्वर! तेजसा त्वमेवास्य सोदरः किमित्येवमुदासीनो वर्त्तसे, ननु सर्वेऽप्येकमतीभूय किमिति नैनमनेन दुर्वृत्तचेतसा वनचरेणारब्धमखिलजगदेकनायकं राजानमागत्य परिगृह्णीत यूयमित्याकुलीभवन्त्यामुत्कम्पमानायामुदयसुन्दर्यामवनिपतिरहो नन्वपसदोऽयमतथ्यसामर्थ्यः प्रोज्झितः सत्वेन प्रकृत्यैव तरलात्मा निदर्शनं च कातरेषु। तत्खलु कथमिवैतदङ्गे त्रिजगदुपगीतविक्रमं व्यापारयामि शस्त्रम्। असाधिते चास्मिन्न नाम तन्वी निराकुलेयमतः करोमि निग्रहम्। प्रमूर्च्छितमुचितप्रहारमूर्च्छया निश्चेतनमिमं विधाय यामि गृहीत्वा प्रेयसीमलममुना पञ्चतां नीतेन वराकेणेति चेतसि विनिश्चित्य सपदि प्रगुणितचपेटाघातनिष्ठुरेण पाणिना दक्षिणेन प्रविश्य तं कपोलतले जघान।

अथ स झगिति पुंसो रूपमासाद्य दिव्यं
विलसदुरुकिरीटप्रायभूषासुवेषः।
वियति सुरवधूभिर्वीज्यमानो विमाने
मनुजपतिमवादीत्साधुभोः साधुसाधु ॥

साधु त्वया क्षितीशतिलक! स्वां प्रकृतिमासादितोऽहमिदानीम्। विसृज व्रजामि। न जाने निजं स्थानमनुगच्छतो मे कियच्चिरमन्तराले विलम्बोऽप्येवं समभूत्। अतोऽनुमन्यस्व मां गमनाय। यत्त्वमप्यनया मनुजभुवनैकचक्रव-

त्तिलक्षणख्यातयोर्द्धरेखयेव कराग्रमिलितयाऽलङ्कृतो मृगीदृशा भो मलयवाहन! व्रज स्वीयमावासनगरं प्रतिष्ठानं तवैव कृते विधिना निर्मितेयमानीताऽत्र परिपालिता च मयेति प्रोक्तो महीपतिः सविस्मयमानन्दमधुरेण वचसा तं प्रत्यवोचत्। अहो विवेकिन्! कथय को भवान्? कथमिदमेव दिव्याकृतिरभव्यं वनचरत्वमापन्नोऽसि? किमर्थं वेत्थमस्यां मृगीदृशि निकामदुष्करमिमं परिपालनक्लेशमनुभूतवानसि? किमित्यसावपीदृशं वनवासदुःखमासादिता? कथंचन मत्करप्रहरादिमां प्रकृतिमागतोऽसि? कुतश्च मां नामनगरसंवित्तिपूर्वकं ज्ञातवानसि? ज्ञातासि चेदन्यदापृच्छयसे कतमोऽयमेवमुदग्रमेदुरो गिरिः? किमभिधानमम्भोधिसोदरमिदं च हृद्यं सरोवरम्? अस्य च माणिक्यभवनस्य किमन्वयं निर्माणमित्यादि पृष्टो नृपेण सोऽभ्यधात्।

भोः क्षितिभृतां नाथ! कथयामि श्रूयतामस्तीह लोके विद्याधराणां सुमेरुवप्रोपकोणवर्त्तिनी कोशातकीति सुरलोकविश्रुता नगरी। तस्याः प्रभुस्ताशकिरीटो नाम विद्याधरोऽहम्। अहं चैकदा भुजगभवने भगवन्तमन्धकविपाटकं हाटकेश्वरमष्टमीचतुर्दश्योरवश्यदर्शनत्वेन द्रष्टुमष्टम्यां गतवान्। तत्र च तमिष्टफलकल्पपादपं देवमन्यदिवसोपहारप्रक्रियाक्रमेणैव सम्भूरिभावमभ्यर्च्य वासरमखिलं च तत्सेवयाऽतिवाह्य कृतकृत्य इव निशाऽवसरमासाद्य निर्गतो नागलोकात्। अनन्तरमेकत्र समुद्रस्यान्तरद्वीपके दूराद्विसर्पिणा विशदचन्द्रिकालोकपरिकरेण स्पष्टीकृते सौधशिरसि हरितपत्रातपत्रमात्रावरणमण्डपेऽनल्पदलकिसलयकृतोरुसंस्तरे निद्रान्तीमिमामपश्यम्।

दृष्ट्वा च दूरतोऽपि वदनमस्या वितर्क्य चिन्तितवानस्मि।

किमेतन्निर्मुद्रं नलिनमलिभिश्छन्नशिखरं
किमिन्दोर्वा बिम्बं नवगवलनीलाङ्कसुभगम्।
न नैतत्तन्वङ्ग्याः कुरुलपटलाडंबरसखं
मुखंसाधुः साधुर्विधिरयमहो यस्य घटना॥

इति विनिश्चित्य झटित्यनेकसुरलोकनायिकोपभोगक्रीडाकृतार्थमपि त्रिभुवनाभिनन्द्यसुन्दरीसौन्दर्यगुणाकृष्टमिव निविष्टमस्यां मे मनो यदेतदनयाऽपहृतचेतनो विवेचितवानस्मि। यत्किल किमसौ कुमारी परिणीता वा, कुमारी स्वयमनुरागेणागता पितृजनेन वा वितीर्यमाणा गृह्यते, परिणीता च पराङ्गनेत्यगम्यैव धीमताम्, इयं तु शिशिरोपचारपरिचयादस्माद्विप्रयुक्तेव च प्रियत-

मेन पूर्वानुरागेण वा विप्रलब्धा पराङ्गनैव गण्यते, इत्यादि परामर्शविकलस्य मे विस्मृतोऽयमेकहेलयैवात्मा । विस्मृतं कुलव्रतम् । विस्मृतः पन्थाः सुकृतस्य । विस्मृता गिरो गुरूणाम् । विस्मृता च लोकस्थितिः । केवलमनङ्गहतकेन पापीयसा प्रेरितः, प्रवर्त्तितो दुष्कृतेन कर्मणा, संज्ञितो नरकगत्या, केनाप्ययशःकलङ्केनाभ्यनुज्ञातः, सरभसमियमेवात्मा, कुलव्रतमियम्, इयं मार्गः सुकृतस्य, तत्त्वमियं गुरूपदेशानाम्, इयं च सा लोकस्थितिस्तनूदरी, तदनया करोमि सफलं संसारम्, अनुत्थापयन्नेव न यथावेत्ति कश्चिदपि तथा त्वरितमादाय व्रजामीत्यसन्दिग्धेन मनसा समीपमुपसृत्य झगित्युत्क्षिप्य ततः प्रवालतलात्सुप्तामेव निभृतमेनां निजं विमानमधिरोप्य जातालब्धलाभ इव सहर्षमन्तरिक्षपथेनागन्तुमारब्धवान् । वीक्ष्य विमाने मुहुरमुष्या वदनमम्बरे च शशभृतो बिम्बमिदं चिन्तितवानस्मि ॥

स्वच्छेन्द्रनीलफलकप्रतिमे यदेत-
देवं विभाति गगने शशिनोऽस्य बिम्बम् ।
मन्ये तदत्र सुरयानभुवि स्थितायाः
सङ्क्रान्तमुज्वलमुखप्रतिबिम्बमस्याः ॥

अथवा स एवायममृतरोचिः किन्तु—

अस्या मुखेन विजितो नियतं बिभर्त्ति
कालुष्यमन्तरितमिन्दुरतः सदैव ।
ज्योत्स्नापटेन पृथुना स्वमसौ पिधाय
रात्रौ परं प्रचरति त्रपयेव गुप्तः ॥

पुनर्विभाव्य यदि वा न खल्वसौ हिमांशुरन्यदेव तर्कयामि किंचित्, तथाहि—

रूपेण नूनममुना भुवनत्रयेऽपि
नास्याः समं युवतिरत्नमितीह धात्रा ।
व्योमावनौ खटिकयाऽन्यपुरन्ध्रिकाणां
रूपस्य शून्यमिदमिन्दुमिषेण दत्तम् ॥

भूयोऽप्येनां प्रति सशिरःकम्पमहो निद्रामीलितविलोचनस्यापि सौन्दर्यमाननस्य, अहो प्रवालतल्पदलदाहकान्तर्दवथुकदर्थिताया अपि लावण्यमङ्गयष्टेः, अहो शिशिरोपचारचन्दनजडीकृतानामपि कान्तिरवयवानामित्यादि(प्र)शंसापुरस्सरमनवरतमस्यां निषण्णेन चेतसा शून्यीकृतविमर्शमागच्छतो

मे झगित्यस्यैव भूभृतः शिरस्थेकस्य गगनगङ्गातटे तपस्यतो महर्षेरुपरिष्टात्सा-ङ्गप्रघर्षमिदमहो मेदिनीनाथ ! विमानमगमत् । कुपितेन च तेनावलोक्य क्रूर-या दृशा रे रे चपल चापलस्य फलमदूरविषयमनुभावयामि भवन्तम्, इदा-नीमेव निर्विलम्बमनुभव,भवामुना मूर्खत्वाद्दुष्कृतेन चपलः प्लवङ्गमो वनपशु-रित्येवमुक्त्वा यावदग्रेविमानं वीक्षते तावदन्तरितां क्षामोदरीमपश्यत् । तत श्चासौ सर्वविर्त्किचन ध्यानादवहितीभूय ससंभ्रममाः पाप ! पुनरपरं स्त्रीरत्न-मपहृत्य रे गन्ताऽसि तदिमामेवास्य भूभृतो रविभृङ्गस्य मेखलायां कुवलया-मोदंनाम यत्सरः तस्योपकण्ठवनसुस्थितेन त्वया पालयता स्थातव्यमस्याश्च कृते मद्वचःप्रभावाद्भविष्यत्यधुनैव गिरेर्भित्तिगर्भमधिकृत्य वासाय पेशलं माणिक्यभवनमित्युदीर्य झगिति हृदयचिन्तितमुपस्थितं पुरो दिव्यमिदमा-दाय च महारत्नमन्यच्चैव किरणकोश नामा समुद्रान्तः सुधाहृदस्योदरे विनि-ष्पन्नो मणिः सकलविषविकारमूर्च्छाङ्गपरिवर्त्तनाद्यपायहरोऽस्याः सर्वापदामा-स्पदेऽत्र विपिने वसन्त्या भविष्यतीत्येवमनुकम्पया चूडामणिपदे निरूप्य तूष्णीमकरोत् । अहमपि तया दुर्वारशक्त्या शापोक्त्या दुर्द्धरदवानलज्वालाह-तो वनवृक्ष इव झटित्येव श्यामलीभूतः । सानुतापमथे तदेतत्परयुवतिरत्नाप-हारपापस्य फलमुपस्थितं ममेत्थमिति संप्रधार्य च दूरमवनमितमौलिः प्रणम्य सविनयमवोचम् । भगवन् ! अज्ञानतिमिरान्तरितदृष्टेरधर्मनिर्मूलितविवेकस्य मे पुनरात्मलाभेन प्रसीदतु भगवान् दयाराशिरास्पदं च क्षमाया इत्येव-मभ्यर्थिते मया स मुनिरार्द्रीभूतेन मनसा भवत्वेवमहो यदा खल्विहैव तिष्ठन्त्याः प्रतिष्ठानपुरनरेश्वरो मलयवाहनः पाणिग्रहणमस्याः करिष्यति तदा तत्करप्रहारताडितस्य ते शापान्त इत्युक्त्वा विरराम । अनन्तरमहं तथैव तथा तस्य मुनेराज्ञया झगित्येवमत्र संभूतवान् । स्थितश्च यथा तथा स वेत्स्यति येन दृष्टोऽस्मि । जानामि पुनरेतदेवाद्य यत्किलावनीन्द्रशेखर ! तवानुभावात्स एष मे समुपजातः कर्मक्षयः, त्वं पुनरमुतो मुनीन्द्रस्य वचनादागतः, क्षितिधरोप्ययेष रवि-भृङ्गनामा, सरश्च कुवलयामोदसंज्ञमित्यपि तस्यैवालापप्रसंगेन कथितम्, माणि-क्यभवनं च तदाज्ञासिद्धमिति कथितमेवास्ते, तद्भो ! भुवनोपकारिन् ! सुकृति (नांव)रैष भवताऽनुपृष्टः कथितो वृत्तान्तः, प्रसीद याम्यहमिदानीमित्येवमुक्त्वा सप्रश्रयमनुज्ञातो नृपेण झगित्येवोत्पत्य दुरालोकमम्बरमगोचरश्चक्षुषो बभूव ।

अथैवमखिलं वृत्तान्तमावेद्य गते तस्मिन् प्लवङ्गभावापनोदलब्धात्मनि विद्याधरे विलोक्य दिशो वसुमतीप्रभुरभीष्टयुवतिसङ्गमाभिनन्दनपुरस्सरं चिन्तितवान् । नन्वनुकूलविलसितस्य विधेः प्रभावात्प्लवङ्गानुपृष्ठपरिसर्पणप्रस-

ङ्गेन मिलितेयमसंभाव्यसंगमा प्राणेश्वरी । नवेष्टजनवियोगदुःखादपरमनुभूतवती क्लेशम् । इदानीमरण्यमिदमेवं निरुद्धदिङ्मुखालोकमस्त्येकडम्बरं च सर्वतः । कः प्रदेशोऽयमवनेरिति सर्वथैवाप्रतीतम् प्रतिष्ठानं हि कुत्र किल ककुभो विभागे कियति वा दूरे वर्त्तत इति न नाम ज्ञायते । ( सुकृत ) सन्निवेशादिहोपस्थितैव परं तारावली । नत्वसौ नभःप्रचारपटुतराऽपि पुरन्ध्रिसौख्याद्दुन्मोह( मवधार )यितुमीश्वरादिशः । नवा जन्तुसंचारागोचरेऽस्मिन्काननेऽन्योऽपि मनुष्यजन्मा कश्चिदासाद्यते यमापृच्छ्य वाञ्छितां दिशमनुसरामः । तदेवमितो गमनाय न तादृगुपायोऽस्ति कश्चन । विस्मृतश्चामुतो विद्याधरादस्यैव कथाकर्णनरसान्यहृदयेन मयाऽत्र प्रष्टुमुपदेशः । खेचरा हि बाहुल्येन सदाऽपि भ्रमन्तो वियति विदन्त्येव भूलोकविषयिणः प्रदेशान् । अथवा (यदि नाम) पुनरसावद्याप्यवान्तरोत्पद्यमानव्यासङ्गविलग्नो वियत्येव तिष्ठत्यतः पश्यामि तावदिति विचिन्त्य महीयसो मोहान्मिथ्याशया गगनमनुप्रेषितेन चक्षुषा सहसैव तस्मिन्नन्योन्यसङ्गतमेकप्रमाणमेकक्रियमेकरूपं च स्वरूपमेदुरमुदारपक्षं पक्षियुगलमालोकयाञ्चक्रे । तच्च झगित्येव तं पक्षिभावमपहाय सुवपुषा पुरुषरूपेण भूत्वा नभसस्तलाद्भुवमवातरत् । दृष्ट्वा च दूरतोऽपि प्रियया परीतं राजानमागत्य रभसा द्वयमपि प्रणाममकरोत् । कौ भवन्ताविति पृष्टे महीभुजा कृताञ्जलिरेकस्तयोः सविनयमुवाच । देव ! तदा देवेन विश्वोदरान्तरितं कामिनीरत्नमन्वेषयितुमनुप्रेषितस्सोऽहं तवादेशधरः क्षपाचरो मायाबलः । अयं च पातालक्षत्रियस्य शिखण्डतिलकस्यासः पदातिरस्या एव गवेषणाय भारतवर्षे निरूपितो दम्भोलिनामा भुजङ्गवीरः । जातश्च मूलतः पातालमखिलं त्रिदशभुवनमित्युदीक्ष्य लोकद्वयमिदानीं ( भू ) लोकमधिप्रचरतो ( मम ) सार्द्धमनेन सौराष्ट्रदेशे प्रभासनामनि क्षेत्रे मेलापकः । तत्र चानवरतयात्रायातत्रिभुवन( ज )नोपमर्ददुर्दर्शदर्शनसमकालकल्पितफलार्पणप्रवणमीश्वरं श्रीसोमनाथदेवमिष्टार्थसिद्धये विज्ञापयितुं च प्रविष्टयोः प्रस्तुतामर्थयमानयोः कार्यसिद्धिमन्योन्यमर्थनालापमेकमेव श्रुत्वा सादरमन्योन्यं च कृतप्रश्नादवगतैकप्रयोजनारंभयोः सख्यमिदमावयोर्बभूव । ततः प्रभृति सहैव स्वैरप्रचारपेशलं पक्षिरूपमाधाय विचरतोरत्रेदमनिन्द्यजलशकुन्तकूजितारावसूचितमुदञ्चितानेकपङ्कजमनोहरं सरो दृष्टिगोचरमभूत् । जाता च द्वयोरनवलम्बनाम्बरविलंघनश्रमेणार्त्तयोर्मुहूर्त्तमतिशिशिरपरिकरेऽत्र महासरस्यखिलसुखानुभोगवैदग्ध्यवता मनुष्यरूपेण विश्रमितुं सममेव मानसी वृत्तिः । अतस्तथैवावतीर्णाविह । दृष्टश्च दिष्ट्याऽत्र

मया मिलिताभिवाञ्छितवधूसखो निजप्रभुरावेदितश्च दम्भोलिः। अनेन च (कथितं) यथोचितवरावासिनिर्वृतस्वान्तेयमात्मनः स्वामिपुत्री, सिद्धमीहितं, फलितो मनोरथः (इति)। किमुच्यते ?

स्वामिन्नेवमसीमसंभृतलसल्लावण्यवत्याऽनया।
प्रेयस्या सहितेऽद्य हृद्यमहसि द्रागेव दृष्टे त्वयि॥
देवश्चन्द्रविभूषणोऽद्रिसुतया शच्या च सङ्क्रन्दनः।
साक्षात्सोऽपि हरिः श्रिया परिगतः क्षोणीश ! दृष्टो मया॥

अथवा—

हृद्भूमीभवने प्रविश्य जगतः कामेन रत्या च यो।
द्वाभ्यामप्युपजीवितश्चिरतरं शृङ्गारनामा रसः॥
सिद्धं तेन तदेतदुज्झितजरद्रूपं नवीभूय च।
प्रोद्भूतं युवयोर्द्वयं प्रचयिनी तेनेयमेवं द्युतिः॥

किन्त्विदानीं देवोऽप्यावयोरपनयतु कौतुकं कथयतु निजं देव्याइव विषमं प्रदेशमीदृशं प्रत्यागमनदुर्घटं वृत्तान्तम् अत्र च किमेवमद्यापि स्थीयमानमास्यत इति सप्रेमातङ्कमापृष्टो राजा तयोर्यथावृत्तमखिलं (न्यवेदयत्) निवेद्य निर्गमोपायपण्डितश्च मायाभिस्तत्खलु निर्गमानुरूपमुपदिश्यतां किमपि, प्रकारं वा कमप्यासूत्रय, येन वयमनेन सार्द्धं प्रियपरिग्रहेण युगपदासादयामो निजं राजधानीनगरमित्येवमादिष्टे महीभुजा झगित्यदृश्यभावमापन्नवान्मायाबलः।

पुरो भूतं च परमसङ्कटाभोगभव्यमुद्भासि भास्वरपताकमस्तोकमणिकिङ्किणीचक्रवालमालितमसमहेमनिर्माणरम्यं विमानम्। उत्थिता च निराश्रया वियत्तले भारती। भो भोः! क्ष्मापालपुङ्गव! स खलु मायाबलोऽहमेवं त्वदग्रे मायया नभश्चरं प्रतिष्ठानपुरगामि च संवृत्तो विमानमेतत्, आरुह्य चात्र सममेव सानुनायिका नायिकेयमिच्छासंपन्नमनोरथश्च देवः प्रयातु प्रापयिष्यामि क्षणादेव तत्खल्वधिष्ठानसुखसुन्दरमभीष्टतरं नगरमित्यमृतवृष्टिमिवादृष्टमूर्त्तिना मायाबलेन प्रणीतामाह्लादिनीं वाचमाकर्ण्य सोत्साहमुर्वीपतिरुपायोत्पत्तिसुस्थितेन स्थिरीभूतेन चेतसा कृतकृत्यइव दम्भोलिविसर्जनाय मुखमुदयसुन्दर्या व्यलोकयत्।

सापि चात्मनो हृदयस्य संवादिनमभिप्रायं प्रेयसो विबुध्य लब्धहृदया च तारावल्या निर्वर्त्तिताशेषकुलगृहारोग्यवार्त्ता प्रश्नपरिपाटिरुवाच दम्भोलिम्। अहो भ्रातः! अधुना कृतं विलम्बेन त्वरितमित एव सिद्धाभिवाञ्छितो भवान्, व्रजन्वर्द्धापयतु भुजङ्गकुलाभरणशेखरस्य मत्पितुः कथयतु च पुरा मर्त्यलोक-

वर्त्तिनि त्रैलोक्येऽपि विख्यातनामनि प्रतिष्ठाने सन्तोषसुस्थितां मामविवसन्तीम्, तारावली तु प्रतिष्ठानगतानां यथालोचयतामस्माकं प्रतिभास्यत्यस्याश्च वा चित्ते भविष्यति तदा नूनमसावप्येष्यतीत्यादि सदृशं सन्देशमुक्त्वा तमतिमहता प्रश्रयेण विससर्ज। सोऽपि स्वबन्धुभावोचितमुदयसुन्दरीमापृच्छ्य शिक्षयित्वा च सततनिकटावस्थितित्वेन तारावलीं प्रणम्य गुरुणाऽनुरागेण राजानमालप्य च विमानीभूतमेव मायाबलमेकहेलयैव पवनभावमापद्य गतवान्।

अथातिमुदितो महीपतिरानन्दमधुरया गिरा सस्थाननिर्देशमादावुदयसुन्दरीं ततस्तारावलीमारोप्य मध्ये च तयोः स्वयं तत्खलु मायाबलेन स्वदेहकल्पितं दिव्ययानमधिरूढवान्। झगित्युत्पत्य निर्गतेन च बहुअन्तरिक्षवर्त्मनि तेन मायाविमानेन कियतोऽपि कालकलाविभागस्यान्तरे स्वं पुरं प्रतिष्ठानमाससाद। बहिरेव नगरस्य सप्रमोदमुत्तीर्य ततो विमानादेकत्र परिसरश्रियो विपुलनीलातपत्रस्येव घनच्छायायतस्तले नन्दिवृक्षस्य सार्द्धमुदयसुन्दर्या पुरोगतया च तारावल्या निषसाद। अथ झगित्येव तत्खलु रूपं वैमानमपहाय दिव्येन वपुषा कृताञ्जलिरग्रतो भूत्वा जगाद मायाबलः—

स्वामिन्! इत इतो निवेश्यतां दृष्टिः "अहो यः किल तदाऽनुपृष्ठप्रधावितस्तस्य प्लवङ्गमहाद्भुतस्य कुत्रचिदगोचरे मानवजनस्य गतवान्, यदर्थं च नितान्तमुत्ताम्यता चित्तेन सुचिरमियन्तं कालमास्थितस्तदेव कुतोऽपि लब्धमादाय दिव्यं युवतिरत्नमागतो नरेन्द्रशौण्डीरः" इति प्रवादमुखरः समूहेन धावन्नयमयमायाति ते पश्य परिजनस्तन्मामित एव विसृज क्षितिपालपुङ्गव! त्वरितमपृच्छन्नेवाहमागतः कियत्कालो वर्त्तते न जाने मयि कीदृशं मनस्स्वामिनो विभीषणस्येति। सादरं निशम्य भूमीश्वरो नन्विह तव स्वायत्ताशेषवाञ्छितविभूतेः किमातिथ्यमाचरामि तथापि यदा कदाचिद्यद्भनार्थी भवान् तन्मे शरीरमपि तवाधीनमेतदित्यभिधाय महता प्रश्रयेण तं विससर्ज रजनीचरम्। अत्रान्तरे च क्षणादेव सर्वतोदिक्कमुद्भूतरभसमानन्दनिर्भराः प्रघनविस्मयाविष्टदृष्टयो मन्त्रिणः, प्रणयपरिणद्धवृत्तयो भूमिपालाः, विविधवंशप्रसूतयः क्षत्रियकुमाराः, सकलभुवनोपगीतकीर्त्तयः सामन्ताः, कृपाणकुन्ताङ्कुरितभुजवल्लयः प्रवीराः, प्रभूतरीतयः सेवकाः, वर्द्धापनकपाणयश्च पौरपुरुषाः, इत्याद्यनेकधा प्रकीर्णो भूयसा प्रसरेण समागतो लोकः। तेन चावृतः समन्तादस्तोकगजघटान्धकारितप्रान्तस्तरलतुरगसेनातरङ्गितोर्वीतलो धवलविपुलातपत्रपिहिताम्बरः संभा( नभो ? ) रसारावैभिर्वाद्यमानैरनेकजातिभिः

पुण्यवादित्रकैर्मुखरितदिगन्तरः प्रथममेवागत्य मिलितेन कुमारकेसरिणा पृच्छ्यमानवृत्तान्तः प्रत्यक्षभूतया चक्रवर्त्तिपदश्रियेव सार्द्धमुदयसुन्दर्या विभूतिमहितासनोपकरणसज्जितां विजयकरिणीमधिरूढः प्ररूढवृद्धिना विलासेन सप्रमोदमन्धरमभितोऽपि गृहे गृहे वाद्यमानवर्द्धापनकमुद्गीयमानधवलमानन्दनृत्यत्सुवासिनीकमुपरचितहट्टशोभममुना च शोभासत्कारपरिकरेणोत्सवाद्गृहीतशृङ्गारमिव नगरं विवेश ।

ततश्च स्वर्गतोऽवतीर्णमिवानङ्गरतिमयं मिथुनमालोकयितुमुत्तालवृष्टिना कुतूहलेनाकृष्यमाणा विहाय सकलं विलासव्यापारमतिरभसाद्धावन्त्यो लगन्त्यस्त्वरितमुत्पथेनापि विलङ्घ्य त्रुटन्तमप्यगणयन्त्योहारादिमणिसरकलापमन्योन्यमाह्वयन्त्यश्च प्रसरेण निःसृताः स्वर्गादिव पतिताः पुञ्जिताः सौधशिखरेषु, पातालादिव निर्गताः संभृता गवाक्षगर्भेषु, अन्तरिक्षादिव विघटिता विस्तृता उत्सङ्गेषु, भूतलादिव समुत्थिताः प्रकीर्णाः प्राङ्गणेषु, संगता वेदिकासु, मिलिताश्च तोरणद्वारेषु कामिन्यः ।

प्रथममेव रभसान्निःसरन्त्यश्च ताः काश्चन जघनभारासहिष्णुतया पदे पदे प्रस्खलन्त्यः कुलव्रतेनेवानुपृष्ठप्रधावितेन हठादाकृष्यमाणाः प्रचेलुः, काश्चन त्वरयाकृष्यमाणमुरुगुरुभराक्रान्तमशक्तमिव क्वणन्मणिनूपुररणितच्छलेन चरणयुगलं क्रन्दयन्ति स्म, काश्चन प्रधावनवशोद्धताङ्गविक्षेपादितस्ततो दोलायमानमुक्ताकलापविसृतेन विशदकिरणनिकुरुम्बकेण चामरेणेव हृदये तत्कालविश्रान्तं राजानमुपवीजयाञ्चक्रुः । निःसृत्य दर्शनस्थानमनुप्रासाश्च काश्चन गिरिसुतार्चनक्षणे गृहीतधूपदहनका एव धाविता उमाऽऽकृतिभ्रान्त्या झगित्युदयसुन्दरीमुद्दिश्य धूपमुपदर्शयन्ति, काश्चिदन्योन्योपमर्दकलहैरन्तरितदर्शनाः पश्चात्तापमुद्वहन्ति, अपराश्च काश्चिदेकस्मिन्नेव नयनकुवलये कज्जलमेकस्मिन्नेव कपोलतले पत्रभङ्गमेकस्मिन्नेव श्रवणशिरस्यवतंसकैरवमेकस्मिन्नेव कर्णे कनकपत्रमेकस्मिन्नेव करे कङ्कणमेकस्मिन्नेव चरणे निधाय नूपुरमुत्सुकेन मनसा विनिःसृताः पुष्पेषुनटनाटकनिविष्टा इव यथावदर्द्धनारीश्वरं रूपमादधिरे । एकाभिरप्यानन्दबाष्पाम्बुभिश्छटकं, स्मितवशविकासिदशनांशुभिः स्वस्तिकान, प्रकम्पविगलितावतंसकुसुमैः पुष्पप्रकरम्, अनुपथं प्रयच्छन्तीभिः, अन्याभिरतिवेगविस्मृतोत्तरीयवस्त्रतया करतलावृतपयोधराभिर्मुखनिहितपङ्कजान्पूर्णकलशानिव पुरः प्रगुणयन्तीभिः, प्रविशतो मिथुनस्येव विरचितो माङ्गलिकसत्कारः । काभिश्च सुरतमपि राज्ञे दापयितुमात्मानमर्थयन्तीभिः श्वश्रू-

सकाशमपि राजसंगमाप्राप्तिदुःखमुदीरयन्तीभिर्ननांदारमपि दूतिकात्वेन समुपालब्धुं शिक्षयन्तीभिः साक्षाद्विडम्बितः स्वात्मा। काभिरन्योन्यं सपत्नीभिः श्वश्रूस्नुषाभिर्भ्रातृजायाननान्द्रादिभिरेकस्मिन्नेव राजन्यभिलाषमालोचयन्तीभिरादृतं तत्खलु समानशीलव्यसनत्वात्सख्यम्। कासांचिदुदयसुन्दरीनिरीक्षणनिषण्णानां नाभवद्विलोचनपथे मलयवाहनः। कासांचिन्मलयवाहनालोकनप्रसक्तानां बभूव विघ्नमुदयसुन्दरीदर्शनस्य। स्थानेषु स्थानेष्वेकाः खलु मलयवाहनं वर्णयन्त्यन्याः स्फुटमुदयसुन्दरीरूपमुपकीर्त्तयन्त्यपराश्च मिथुनमपि श्लाघन्ते सहर्षमित्येवमनेकचेष्टापुरःसरमहंप्रथमिकया परस्परोपमर्दसंभ्रमेण युगपन्नगरनारीभिरालोक्यमानः, प्रशस्यमानः प्रशस्तमानसैः सूरिभिः, आशिष्यमाणस्तपोधनैः, अभिनन्द्यमानश्च प्रकृतिलोकैः, उद्दण्डचलचामरकराभिरनेकशो वारविलासिनीभिः प्रगुणितारात्रिकशेषाक्षतोपकरणपात्रवतीभिर्गोत्रविलया( वृद्धा? )भिर्धवलगीतिमधुराभिः पौरजनसुवासिनीभिर्जयजयोद्घोषमुखरैर्बन्दिभिरुद्गीतरीतिभिर्गाथकैः पठद्भिश्च निखिलवेदार्थवेदिभिर्ब्राह्मणैः क्रियमाणमङ्गलाचारः, प्रहतपुरुहूतसंपदाडम्बरेण विविधमणितोरणोपचारचर्चिताभोगशोभिनि राजकुले संचचार।

जातश्च महानुत्सवः। पतिता च गगनाज्जयतादुदयसुन्दरीति दयितयाध्यासितः श्रिया मर्त्यलोकमवतीर्णो मलयवाहनापरप्रकृतिर्जनार्दन इति जयजयालापनिर्भरैः स्वर्गिभिरनल्पशो विसृष्टा पुष्पवृष्टिः। उदभूच्च तत्र तैरेव सप्रमोदमास्फालितानामदभ्रतरो दुन्दुभीनां विनादः। किमन्यदन्यैव हि विभूतिरुत्सवाडम्बरस्य।

कौसुम्भैः प्रतिमन्दिरं पुरवधूवासोभिरुत्पल्लवः
श्वेतोदञ्चितगुडि( च्छि? )काभिरभितः प्रत्यापणं पुष्पितः।
विस्फारैः फलितश्च पूर्णकलशैः प्रत्यङ्गणं विस्तृतः
प्रत्यध्वं प्रतिगोपुरं प्रतिगृहद्वारं च यस्तोरणैः॥

अपिच—

दिव्यैराभरणैर्विचित्रवसनैरामोदहृद्यस्रग्भि-
र्माल्यैर्भूरिविलेपनैश्च समभूद्भूषासमृद्धो जनः।
यद्वा किं न भवेद्भवेदपि यतस्तत्र प्रविष्टा पुरे
सा तेनोदयसुन्दरीति पटुना रूपेण लक्ष्मीर्ध्रुवम्॥

अथैवमेतस्य प्रत्यहमुत्तरोत्तरप्रवर्धमानस्य मध्ये महोत्सवस्य सहसैवाजगाम पातालभुवनात्प्रगुणिताशेषवैवाहिकोपकरणपाणिः कतिपयजरत्कञ्चुकिमह

न्तरासपरिचारिकाप्रभृतिपरिजनोपेतः कृते वधूवरस्य बहुविधाभरणनेपथ्यादि नरलोकदुर्लभं वस्तुजातमादाय राज्ञा शिखण्डतिलकेन प्रेषितो राजाङ्गनिर्विशेषः पिता तारावल्याः सेनाधिपो रत्नमौलिः ।

तेन चागत्य पुनर्नवीकृतो द्विगुणितश्च सोऽत्यन्तमुत्साहमेदुरो महीयसाऽऽडम्बरेण विभ्रमारम्भमुत्सवाभोगः। समर्पितश्च स खलु निखिलोऽप्युदयसुन्दरीसमीपत्वेन मातृगृहादागतः प्रति(परि ?)चारको लोकः। कथितश्च वाञ्छितवरलाभसुस्थिता समुपजाता पुत्रिकेति दम्भोलितः श्रुत्वा समं महादेव्या विजयरेखया प्रमोदमागतस्य राज्ञः शिखण्डतिलकस्य प्रेमपरिगतालापबन्धुरो बन्धुसंबन्धजन्मा सन्देशकः। तथैव चात्मनः सुता तारावली राज्ञा सादरमुपवर्ण्य कथितस्य विशेषतः पुनरुदयसुन्दर्या पुरस्कृतस्य सुरूपेण च मनसः प्रतिभासितस्याथ च नितांतमभिप्रेतस्य राजसुहृदः क्षत्रियकुमारस्य कुमारकेसरिणो दत्ता परिणेतुम्। अनन्तरमसौ रत्नमौलिर्निर्वर्तितसकलसंयुक्तकोपचारप्रक्रियाकलापः स्वागतोपहारपरितोषितश्च सानुबन्धमुदयसुन्दरीदुर्ललितसहनेन राजानम्, राजहृदयानुकूलवर्त्तनेन सुहृदमुदयसुन्दरीम्, उदयसुन्दरीशरीरहिताचरणेन तारावलीम्, तारावलीपालनोपचरणेन कुमारकेसरिणम्, सौढि(हि ?)त्यकरणेन पुनश्च राजानं सजङ्घागृहमभ्यर्च्य पृष्ट्वा च गमनाय कृतकृत्यश्चानन्दितेन चेतसा स्वं जगद्विरोचनकक्षाश्रयं जगाम ।

राजा च मलयवाहनस्तया वल्लभया सार्द्धमुदयसुन्दर्या तेन च प्रचुरदेशदानोपवर्द्धितैश्वर्यसुस्थितेन मथुरापतेर्जनकस्य कलिन्दकेतोः स्वसौख्यापादितप्रमोदेन तारावलीपरीतमूर्त्तिना सुहृत्तमेन कुमारकेसरिणा विनोद्यमानहृदयो नानापथविपञ्चिताभिरनेकरसविशेषशालिनीभिर्भूरिशो विलासभङ्गिभिरनवरतमखिलान्येव मर्त्यलोकसुखानि भुञ्जन्नसारमपि सार(म)करोत्। अत्रान्तरे च समुपजाते हि कथाऽवसाने संवृत्य पुस्तकमुद्ग्री(वी)भूय स्थितवति तस्मिन्कवीश्वरे तौ तिलकतालकाख्यौ द्विजपुङ्गवावेकहेलयैव परस्फुरद्दिव्यतेजसावमरपुरसुन्दरीकरचलितचामरोपवीज्यमानाकृती विमानयानगतावन्तरिक्षे बभूवतुः। अवोचदेकश्च तयोः स एव तालको नाम। भोः सत्कवे! सोड्ढल! श्रुतोऽयमस्माभिस्तावकः प्रबन्धोऽयम्, (अ)पूर्वमिमं श्रोतुमुपक्षिप्ता हि विषयास्ते यादृग्गुणोपरूढसृष्टयः कथ्यन्ते सूरिभिस्तादृशा एव तथाप्युपक्रमः कथाया यथावदाक्षेपको हृदयस्य, संबन्धसन्धिषु काचिदेव सुश्लिष्टता संविधानकस्य, प्रस्तुतोपक्रान्ते च वस्तुनि किमुच्यते स्पष्टैव संपद्रसस्य, पद-

न्यासस्तु मसृणवर्णरचनादिभिर्गुणैराह्लादक एव श्रवसाम्, भणितिभङ्गीषु चान्यादृशमेव निवेशकौशलं लौकिकार्थस्य, किं वाऽन्यदपि। यत्किल कौकिली मायूरी माराली चेति प्रधानजातित्वं कवीनां तदपि क्वचित् किंचन समन्तादस्ति सम्यगतिव्यक्तमेवात्र।

तथा च कुवलयामोदसरसि मूर्च्छान्तसमुत्थितोदयसुन्दरीविलोकितस्य मलयवाहनस्य प्रक्रमे यथा—

"अत्रान्तरे झगिति तस्य मणेः प्रसंगा-
दुच्छिन्नमूर्च्छमपमुद्रविलोचनाऽसौ।
वेगोत्थिता धृतकराग्रमनङ्गरूप-
मग्रे नरेन्द्रमवनीतिलकं ददर्श॥"

अत्र प्रमितिपेशलेव वर्णगुम्फे सप्राणत्वादोजस्विना विभिन्नपदापगतदैर्घ्येण कोकिलरवानुवर्तिना वाणीगुणेन वैदर्भीरीतिमनुसरन्ती प्रकृष्टा कौकिली जातिः।

मायाबलं प्रतिसमरमध्यासितस्य मलयवाहनस्य वीरोक्तौ यथा—

"सर्वत्राङ्गेषु वल्गद्घनगहनशिखाचक्रचण्डाग्रकोटि-
स्फुर्ज्यत्पिङ्गस्फुलिङ्गोड्डमरपरिकरेणाशुनैवाग्निना ते।"

अत्र सौष्ठवोद्रेकवाहिनि वर्णबन्धे घनप्राणच्छा(त्वा?)दोजःप्रधानेनैव समस्तबहुपदायामसरलेन मयूरकेका(नुका)रिणा वाणीगुणेन गौडी रीतिर्मायूरी जातिः।

चन्द्रोदयवर्णने च यथा—

"कमलिनी भुवनान्तरिते रवौ
व्यपगतालिकलापशिरोरुहा।
परिदधे विधवेव सुधाकर-
द्युतिवितानमिषेण सितांशुकम्॥"

अत्र च शैथिल्यशालिनि वर्णसन्दर्भे निष्प्राणत्वान्निरोजस्त्वात्स्वल्पपदसमासानतिविस्तृतेन हंसस्वनानुगामिना वाणीगुणेन पाञ्चालीमंशतः श्रयन्ती माराली जातिः। गद्येऽप्येवमेव च यथोक्तगुणमनोहर एव संवृत्तस्ते प्रबन्धः। किमन्यदेवमेव हेतुरस्मदात्मलाभस्य, तदेष पृच्छयसे, वाञ्छितं सिद्धमधुना, त्वत्तः कृतार्थीभूय यामो वयमहो विद्वन्, ! इति प्रश्रयपुरस्सरमुदीरिते तेन स खलु कविरुत्पन्नविस्मयो मिलितकरकमलसंपुटोपलक्ष्यमाणवृत्तिना विनयेन साभ्यर्थनमुवाच।

हंहो मृषोक्त्या युष्माभिः प्राक्प्रतारितोऽहम्, इदानीं तथ्यमावेद्यताम्, कौ किल युवाम् ? किमिति वेत्थमश्मनो रूपमापन्नौ ? कथमसावतैलवर्त्त्यादि-परिकरस्योद्भेदः प्रदीपस्य ? प्रदीपोन्मेषसमयमेव च कथमिदं मर्त्त्यशारीरिक-मवस्थान्तरम् ? इदानीं तु कथं दिव्यं देहावतारमनुभूतवन्तौ ? कथमनाख्यात-मप्य( न्यस्य )सर्वस्य ममेदमवगतं नाम ? कथं वाऽयमभून्निबन्धो हेतुरात्म-लाभस्य युवयोरित्येवमादरात्कृतप्रश्नस्य कवेः सोड्ढलस्य स नाम तालक एव यथापृष्टं कथयितुमारेभे । भ्रातरहो कविप्रदीप ! नूनमहमस्य सकलस्यापि व्यति-करस्य कारणमाकर्ण्यताम् । एष तावत्स खलु विश्वविख्यातकीर्त्तिः कृती रस-रचितसुवर्णसारया श्रियेव कादम्बरीति कथया पदे पदे प्रकृष्टार्थवता कोशेनेव हर्षचरितेन महानीश्वरः कवीनां वात्स्यायनवंशजन्मा सरस्वतीशिष्यः सारस्वते च लोके कवीन्द्रतिलक इति लब्धतिलकयशाः अग्रणीश्च द्विजन्मनां बाणो महाकविः । अहं च भगवतो ब्रह्मणः सभायामिदमेव तालक इति दधानो नाम सामान्यो देवर्षिरेकदाऽहं ब्रह्मलोकसदसि वसन्नुपस्येव देवमम्बुजासनं द्रष्टु-मुदचलन्नुपश्लोकनार्थं च तस्य मया कृतो धीमन्नयेऽमितावधानमानुष्टुभेन छंदसा श्लोकः । स यथा—

ब्रह्मंस्त्वां स्तौमि तं यस्य पुष्पलिङ्भिः प्रलक्षितं ।
पाण्ड्वाभं वल्गु सुष्ठ्वञ्जं जन्मधिषण्यं च विष्टरम् ॥

अत्र श्लोककविताशुणेन वासितस्वान्तः प्रकामहृष्टो व्रजन्नेकत्र सरस्वती-भवनस्योत्सङ्गमण्डपे मिलितमेव बाणभट्टाध्यासितमधिष्ठितं च कालिदासादि-महाकविभिः कवीन्द्रैश्च विक्रमादित्यश्रीहर्षमुञ्जभोजदेवादिभूपालैः सामन्तैश्च वाक्पतिराजमाउराज(?)विशाखदेवप्रभृतिभिः समन्तादलंकृतं कवीनां वृन्द-मारब्धविविधकाव्यगोष्ठीनिषण्णमद्राक्षम् । उद्भूतबुद्धिश्चाहमये साधु कवि-वर्गोऽयमेकत्रैव काव्यगोष्ठीभिरास्ते तदहमप्येनमभिनवोपरचितमात्मनः श्लोक-मिह गत्वा पठामि श्रावयामि कविपुङ्गवानामेभिराकर्णितः परमं साफल्य-मुपयास्यतीत्येवमनुचिन्त्य गतस्तत्राहमुपदर्शितप्रश्रयमापृष्टस्वागतश्च तैः सगौ-रवमुपवेशितोऽस्मि । यथाऽवसरं तानवहितान्विधाय मया पठितः श्लोकोऽयम् । एकाग्रेण मनसा सर्वैराकर्ण्य बाढमभिनन्दिता मे काव्यशक्तिः । एकः परमसौ बाणः कवीश्वरो रसान्तरपरायत्तचित्ततया यथा किल श्रृणोत्येव न सर्वरूपेण तथा स्थितवान् । अहो द्विजोऽयमश्रव्यपदनिवेशदुःस्वरा छांदसोक्तिरिति मन्य-मानोऽन्यकवितास्वकिंचिद्भाविनः स्वगर्वान्मामवज्ञातवानेवमिति विकल्पतर-

लेन चेतसा झगित्युद्भूतकोपश्चाहं सरस्वत्याः प्रसादशिष्योऽयमित्यविमृशन्— आः ! ! स्वगर्वगरिमापहस्तितसमस्तगुणिवर्ग रे कविवटो पठति मय्येवमवज्ञया स्तम्भीभूय दृषदिव स्थितोऽसि तद्यथेच्छमिहस्थितोऽसि तवामुना दुर्नयविपाकेन पाषाणप्रकृतिरेव भूत्वा मर्त्यलोके सरस्वत्यालये कंचित्कालं क्षपयिष्यसीति शापमत्र सरस्वतीप्रख्ये च कविकुलस्य क्रोधान्धकारितप्रज्ञः प्रयुक्तवान्।

अहह ! ! ! किं किं किमेतद्बाणस्य वृत्तमिति तत्कालविहितहाहारवैः सर्वैरपि तैस्तत्रोपविष्टैः कविभिरस्यानुग्रहाय शापान्तकृते च कियतोऽप्यन्तरान्तरा दृषद्भावापदोऽस्य जंघाग्रहमभ्यर्थितेन पुनर्मया भवतु तस्मिन्नायतने सदैव दीपप्रभासंपर्कात्सकलशास्त्रावबोधनिर्मलमतिः कवितारहस्यवेदी मर्त्यशरीरेण द्विजो भूत्वा रजनीषु दृषदवस्थापगमसमुपस्थितं सौख्यमासादयिष्यति मदेकश्लोकानवधारणोपलब्धशापस्तु यदा हि कवेः सोड्ढलस्य कृतिरपूर्वं उदयसुन्दरीति चम्पूप्रबन्धस्तमभितः श्रुत्वाऽवधारयिष्यति तदाऽस्य शापान्त इत्यखिलकविजनोपरोधादेतद्वितीर्णनिजदुर्नयपरिहारकोत्पन्नाच्च महतोऽनुतापादनु (........? )गृहीत्वा कमण्डलुश्चुलके जलं बाणस्यैव शापेन मां शप्तवती।

मया तु सप्रश्रयमनुग्रहार्थमुपरुद्धा ननु बाणस्य सन्निधिमनुज्झतस्तवाप्यस्यैव शापान्तेन शापस्य पर्यवसानमिति प्रसन्नया गिरा मामनुजग्राह।

तेन च तत्क्षणे तस्मात्समकालमुभावप्यावां तथैव यथोपकल्पितया मूर्त्या झगित्यवतीर्णावस्मिन्। अस्मिन्नपि निर्मानुषारण्यगह्वरगतं शून्यमायतनं देव्या इति प्रतिनिशमतिश्रद्धया मनुजदृष्टेरगोचराभिर्वनदेवताभिः स्वभावात् द्युतिशिखामात्रक एव सदैव दीयते स्म सुकृतेन दृषद्भावदौस्थ्यापनुत्तिहेतुरसौ प्रदीपः।

अथ ततः प्रभृत्येव महायतने स्थितिरेतावन्ति दिनान्यावयोरभूदद्य पुनः सकललोकोपकारिभारतीप्रसरस्त्वमत्र सुकवे सहात्मनो निबन्धपुस्तकेनागतः श्रुतः प्रबन्धोऽवधारितश्च। तदनुभावादेष सखे शापस्य मोक्षः। नाम च तवैतन्नान्नृषिः कुरुते काव्यमित्यस्माकमवतारस्य विदितमेवास्ति। न केवलं नाममात्रकेणैव विदितोऽसि सर्वात्मनाप्यादित एव यथाकिल बालभावमापन्नः स्वर्लोकमनुगते पितरि प्रघनगुणसम्पदामास्पदेन प्रियवयस्येन लाटभूमीपते र्योगिराजस्य गङ्गाधरइत्याख्यावता मा( सू ? )नुना परिपालितः, सकलमनुजेन्द्रमुण्डताण्डवाचार्यचरितस्य च शौण्डीरनृपकुमारगणनाग्रणीभूतनाम्नो धाम्नस्सरस्वत्याश्चौलुक्यकुलाभरणनायकस्य कीर्त्तिराजसूनोः सिंहराजस्य

सहाध्ययनबन्धुः, अध्यापितश्चन्द्रनाम्ना मनीषिणां वरेण, विभूत्या च लाटदेशान्तःपातिविषयाणामन्तः सिङ्करहारीयद्विसप्ततिर्वाहिरिद्वारसप्तशतकं सप्तशतकं चान्यदन्नापल्लीय(?)मेवमन्यतोऽपि विषयेषु कल्पिषु पूर्वपुरुषक्रमागताया ध्रुववृत्तेः प्रभुः। अन्यच्च प्रदीपकश्लोकमुदितेन कोङ्कणमहीभुजा छित्तराजेन कविप्रदीप इति व्याहृतः सभायामित्यादिनानाप्रकारैर्नैवलवैकस्य मे सर्वस्याप्यात्मनोऽवतार इत्यभिमुखीभूतमनसो महर्षिवर्गस्य प्रतीतिमागतोऽसीत्येवमभिधाय तूष्णींभूय स्थितवति देवर्षौ तालके स्वयं बाणोऽपि महाकवित्वगुणावर्जितेन प्रेम्णा बन्धुरितः सम्यगुपदेशपूर्वं वक्तुमुपाक्रमत।

भ्रातः! यथा तालकमहर्षिणा प्रोक्तस्तथैव तावकोऽयमलङ्कारनिरूपिताशेषगुणसम्पन्नः प्राग्रहरो निबन्धः किमुच्यते सत्कविरसि किंतु महीयसा क्लेशेन सिद्धं लब्धं च देव्याः प्रसादेन भारत्याः प्रबन्धमिममिदानीमितस्ततः श्रावयितुमर्थनया मा हन्त गुणद्वेषिणि जनेऽस्मिन्सारमप्यसारीकरिष्यसि। कुतः—

गलयति गिरोऽधीशां देवीं कवीनपि लज्जय-
त्यपि च नयति स्वं तृष्णान्धः कविर्लघुतामसौ।
खलपदमिव क्लीबः स्वीयं प्रबन्धमुदाहर-
न्नुदरभृतये याति द्वारं गृहस्य गृहस्य यः॥

अथ श्रियोऽर्थमेवार्जनं गुणानाम्, तत्र सम्प्रति, पश्य—

शुम्भाष्टापदकोटिकुञ्जरशतप्राप्यः समर्घा(र्घा?)इति
क्रीताः पूर्वनरेश्वरैः सरभसं ये काव्यभाजो गुणाः।
विक्रीयन्त इमे त एव पुरतो यस्यैव तस्याधुना
काकण्याऽपि भुवप्रमोटनमहो द्विष्टा गुणेष्वीश्वराः॥

अपि च—

शीलं सदा सहजमीदृशमेव राज्ञां
यद्भुञ्जते श्रियममी गुणिनोऽपसार्य।
तैः शैशवेऽपि गुणवन्तमपास्य हार-
मास्वादितानि जननीकुचयोः पयांसि॥

तदेतदुच्यसे भोः कविसत्तम! प्रबन्धोऽयमीश्वरनिरपेक्षेण त्वया निवेदनीयस्सताम्। त्वं हि सत्त्वैकधनो मनस्वी विशेषतश्चामुना कवित्वसुकृतेन, ततवल्वदैन्यमेदुरमवासोऽसि पदं कवीन्द्राणामित्यादिसादरमाह्रो(ह्ला?)वितेन वचसा यथावदुपदिश्य यामो वयमिदानीमित्युवाच। कृतगमनप्रश्नोचितप्रश्न-

यश्च विजयः क्रियतामित्यालापपूर्वमुपरचितप्रणामं तं कविमाशिष्य, प्रणम्य च देवीं सरस्वतीम्, झटित्युल्लङ्घितोडुपङ्क्त्या विमानयानङ्र्या सह महर्षिणा तालकेन तमेव ब्रह्मलोकं जगाम।

सोऽपि च कविरहो अपक्वकविताकटुरसेनामुना प्रबन्धेन विधुरितगुणेऽपि कविमात्रके मयि सुकविपदस्थापनसपक्षः पक्षपातो महाकवेर्बाणस्य। बाणोऽपि पश्यत विचेष्टितं दैवस्य येनेदमीदृशमुद्भूतशापमापन्नो दशान्तरम्। अहह दुर्द्धरा ह्येते विचित्रानन्तप्रकृतयो विधिकारपरिणामाः। भवत्वहमप्यधुना किं करोमि। अथवा जागरजडेक्षणोन्मेषः स्वपिमि तावन्न यावद्विभाति, विभाते चोत्थाय पूजयित्वा च देवीं यास्यामीति चेतसि विचिन्त्य तस्मिन्नेव मत्तवारणके पुस्तकमुच्छीर्षकीकृत्य सुप्तवान्। आयातनिद्रश्च स्वप्ने किल काव्यकथावतारिणो महाकवेरादिपुरुषाद्वाल्मीकिमहर्षितः प्रवृत्ते महीयस्यन्वये कवीनामवतीर्णमात्मनमात्मानैव लिख्यमानमद्राक्षम्। झगिति च तत्कालमेव प्रबुद्धवानितश्च जातं प्रभातमुत्थितश्च ध्वनिर्वनकुक्कुटानाम्। अथोत्थाय ससंभ्रमं ननु कीदृग्मया दृष्टः स्वप्नोऽयमथे प्रसन्नया देव्या बाणस्यैव पक्षपातवचः प्रमाणीकृतम्, गणितोऽस्मि कवीन्द्ररेखायाम्, अतो यदुपदिष्टं गिरोऽधिदेवतया तत्करोम्यस्मिन्नेवायतने तद्वंशावतीर्णेनात्मना प्रशस्तमालिखामि पश्चाद्देवीमर्चयामि ततो यामीति संप्रधार्य तत्समयमुद्बुध्यागत्य मिलितेन परिचारकजनेन कृच्छ्रान्मेलितोपकरणः सपदि मरकतशिलापट्टघटितायामायतनभित्तावुत्कीर्य खटिकाद्रवधवलितैरक्षरैरभीष्टदेवताशंसनपुरस्सरं लिलेख। यथा—

पुनातु पाणिग्रहणे हरस्य दृष्टिर्मृडानीमवलोकयन्ती।
रुद्धा प्रहर्षाश्रुमिषागतेन गाङ्गेन सद्वेषमिवाम्बुनाऽधः॥
आसीदसीमस्फुरितोरुधामा वाल्मीकिरग्रण्यतमो मुनीनाम्।
निर्वाणमार्गैकमहाध्वगोऽपि संपर्कितः क्वापि न यो रजोभिः॥
ब्राह्मीनिवासानुमितः स साक्षाद्देवः स्वयम्भूरिति कीर्त्तितो यः।
कोऽन्यः क्रमस्थापितवर्णसारां सृष्टिं कृती काव्यमयीं चकार॥
छंदोविचित्रैर्निहितैः क्रमेण पदैः समन्तान्मसृणीकृतान्तः।
निषेव्यते वर्णमहाटवीषु यस्यैष दिव्यैरपि काव्यमार्गः॥
वंशः कवीनामुदियाय तस्मान्मूर्ध्ना धृतो भूमिभृतां गणेन।
अच्छिद्रितेऽपि त्रिदशप्रतोषी वाणीगुणः स्फूर्जति कोऽपि यत्र॥
यस्मिन्नभूदग्रभवः कवीनां व्यासो मुनिर्यस्य गुणैर्विजेतुः।

ध्वजच्छटेवोन्नतसोमवंशमालम्बिता वल्गति भारते गीः ॥
कविर्गुणाढ्यः स च येन सृष्टा बृहत्कथा प्रीतिकरी जनानाम् ।
या संविधानेषु सुसन्धिबन्धैर्निपीड्यमानेव रसं प्रसूते ॥
स कश्चिदालेख्यकरः कवित्वे प्रसिद्धनामा भुवि भर्तृमेण्ठः ।
रसप्लवेऽपि स्फुरति प्रकामं वर्णेषु यस्योज्ज्वलता तथैव ॥
ख्यातः कृती सोऽपि च कालिदासः शुद्धा सुधा स्वादुमती च यस्य।
वाणीमिषाच्चण्डमरीचिगोत्रसिन्धोः परं पारमवाप कीर्तिः ॥
बाणः कवीनामिह चक्रवर्ती चकास्ति यस्योज्ज्वलवर्णशोभा ।
एकातपत्रं भुवि पुष्पभूतिवंशाश्रयं हर्षचरित्रमेव ॥
मान्यो जगत्यां भवभूतिरार्यः सारस्वते वर्त्मनि सार्थवाहः ।
वाचं पताकामिव यस्य दृष्ट्वा जनः कवीनामनुपृष्ठमेति ॥
सामन्तजन्माऽपि कवीश्वराणां महत्तमो वाक्पतिराजसूरिः ।
यच्छाययाप्यन्यमपीडयन्सन्नुत्पादयत्यर्थमनन्यदृष्टम् ॥
वन्द्यः स विद्वानभिनन्दनामा विस्रम्भपात्रं वचसोऽधिदेव्याः ।
समर्पिता यस्य खलु स्वकीयकोशाधिकारेषु सुवर्णमुद्रा ॥
यायावरः प्राज्ञवरो गुणज्ञैराशंसितः सूरिसमाजवर्यैः ।
नृत्यत्युदारं भणिते गुणस्था नटीव यस्योढरसा पदश्रीः ॥
बभूवुरन्येऽपिकुमारदाससमासादयो हन्त कवीन्दवस्ते ।
यदीयगोभिः कृतिनां द्रवन्ति चेतांसि चन्द्रोपलनिर्मितानि ॥
तस्मिन्सुवंशे कविमौक्तिकानामुत्पत्तिभूमौ क्वचिदेकदेशे ।
कश्चित्कविः सोड्ढल इत्यजातनिष्पत्तिरासीज्जलबिन्दुरेव ॥
यो वत्सराजेन वरेण राज्ञां लाटावनीमण्डलनायकेन ।
सूक्ष्मादृढस्तोकगुणाश्रितोऽपि मित्रीकृतो भानुमतेव पद्मः ॥
जडेन तेनोदयसुन्दरीति कथा दुरालोकिनि काव्यमार्गे ।
सारस्वतालोकलवैकदृष्टा सृष्टा कविंमन्यमनोरथेन ॥
सा चात्र देवीभवने निवृत्तशापार्त्तिना बाणकवीश्वरेण ।
कविश्रमोद्धृतकृपेण सम्यक् श्रुता धृता ह्यभिनन्दिता च ॥
करिष्यते किं पिशुनोऽद्य येन न संमुखं स्थातुमपीह लब्धम् ।
तत्स्यादभद्रं यदि दृश्यतेऽसौ विलूननासः पथि संमुखीनः ॥
दृष्टेऽपि तस्मिन्नथवा न नीचे निर्लूननासप्रतिमे दरोऽस्ति ।

विलोक्यते यद्यसुतापहर्त्ता द्रागेव देवो रविरेष साधुः ॥
साधुर्जयत्यार्त्तिहरः कवीनां कवीश्वराः सूक्तसृजो जयन्ति ।
जयन्ति सूक्तानि फलं हि वाचां वाचामधीशा जयतीह देवी ॥

इत्येवमिमामात्मनः ख्यातिमयीं प्रशस्तिमभिलिख्य यथोपनी( न ? )तैर्वनसरोऽम्बुजादिकुसुमोपहारवस्तुभिरसीमया भक्त्या देवीमभ्यर्चयामास भारतीम् ।

निर्वर्त्तितपरमपूजोपचारकृत्यश्च कृतकृत्य इवानेकसूक्तोपशालिनीभिः स्तुतिभिः स्तुत्वा प्रणम्य क्षमयित्वा च भगवतीं निर्गतस्तस्मादानन्दनिर्भरश्च रभसोत्सुकेन चेतसा नगरमाजगाम ।

विवेश चात्मनो भवनं मिलितश्च मित्राणामेकश्च तेषु सुललितपदोपन्यासवाणीतरङ्गदुग्धाम्बुधिरशोकवतीति कथानिबन्धस्य कर्त्ता महाकविश्चन्दनाचार्यनामा श्वेताम्बरः सूरिः, श्वेताम्बरसूरिरन्यश्चाशुकवितया परमं प्रकर्षमापन्नः खड्गकाव्यपरितुष्टेन महीभुजा नागार्जुनराजेन खड्गाचार्य इति प्रदत्तापरनामधेयो विजयसिंहाचार्यः कविः, कविरपरश्च सकललोकोपरञ्जकानामास्पदमशेषतो गुणानामभिनवो वयसा साक्षाद्बिम्बमष्टापदोपरचितं जैनेन्द्रमनुहरन्त्या मनोहरो मूर्त्त्या दिगम्बराचार्यो भाषात्रयविपश्चकश्च नाम्ना महाकीर्तिः, इन्द्रनामा च रत्नमञ्जरीति चम्पूकथायाः स्रष्टा, सर्वहितालापशालिभिर्गुणैरग्रणीश्च सतां सत्कविरित्यादिभिर्मित्रैर्धीमद्भिरासैर्बन्धुभिश्चानवरतमापृच्छ्यमानवृत्तान्तो विलोक्यमानप्रबन्धः प्रशस्यमानगुणश्च विश्राम्यन् कियन्त्येव यावदास्ते दिनानि तावदेकहेलयैव भूपालसुभटस्य कविकुञ्जरद(ब?)लैकसङ्ग्रहरुचेराक्रान्तधराविरोधिनखरायुधस्य कोङ्कणमहीभुजो मुम्मुणिराजस्यान्तिकादाजगाम कविः पाठकश्च भाषात्रयस्य त्यागी वचस्वी च परमं मित्रमाशैशवादवनीश्वरस्य तस्य च कवेर्बन्धुरिव मधुरसाहारनाम्ना सौजन्यगुणास्पदं भटः। यः खलु परिभ्रम्य परितोऽपि मण्डलान्तरेषु मन्त्रमालामिवाङ्कनामावलीमात्मनो भर्तुरावर्त्तयन् झटित्युत्तारयामास दर्पज्वरं राजचक्रस्य। येन हि परास्थानं गतेन प्रौढपदपेशले वचस्यारोप्य प्रथयता निजस्वामिनः प्रतापमानीतो झगिति गर्वितारिसुभटलोकस्य ललाटफलके प्रस्वेदः ।

स चागत्य रभसादानन्दरसतरङ्गतरलितालापवर्णावलिरालिलिङ्ग कविं प्रीत्या यथासनमुपविष्टश्च वक्तुमारभत। भोः कवीन्द्र ! भवता सम्प्रत्येव कृता चम्पूरुदयसुन्दरीति कथा। सा च निर्जनारण्यवर्तिनि सरस्वत्यायतने

शापागतस्य श्राविता बाणभट्टस्य। तेन च निशम्य सम्यगभिनन्दितेति कविप्रियेण स्वामिना मुम्मुणिराजेन श्रुतं च यथा तथा शृणु। शूर्पारकनगरादागच्छता लाटेन्द्रकुलशेखरेण भूभृता वत्सराजेन कथंचिदध्वनः सन्निवेशात्तस्मिन्नायतने प्रविश्योपविष्टेन दृष्टा झटित्येव भित्तौ प्रशस्तिः। तदोपलब्धोऽयमेवमालिखितो व्यतिकरः। तत्कौतुकाहितरसेन च ते(न)प्रथमं भवन्तमाहूय यथैष संवीक्षितः प्रबन्धो यथा च मत्पठितार्यावधारणनिबन्धना निबन्धसृष्टिरासीदिति ज्ञातं यथाऽयमाश्चर्यहेतुराकर्णितो बाणभट्टस्य वृत्तान्तः तत्सर्वमसमविस्मयरसाक्षिप्तहृदयेन निवेदितं राज्ञे। राजा च सुदूरमभिवर्द्धितानुरागवृत्तिरतिसत्वरमिदानीमेव भवन्तमीहते द्रष्टुमादिष्टश्च मित्रमिति त्वदानयनार्थमहमतो निर्विलम्बमुत्थीयतां गम्यतामित्येव भाषितस्तेन क्रियत एवमिति गृहीत्वा पुस्तकमगाद्राजकुलमवाप चास्थानमण्डपम्। प्रविष्टश्च तत्रान्तरग्रे सेवागतं सङ्क्रान्तनिजपतिप्रतापालोकडम्बरेणेव प्रेङ्खता प्रघनमणिदलकलापदीप्राङ्गभूषणोद्योतपटलेन दुरालोकं सामन्तचक्रमास्थानलोकं च सकलमनुकूलितावनीन्द्रमानसमग्रे च तस्मादखिलविद्यावग्रहमहामतिमचिन्त्यसिद्धेश्च साधकं कवीनामिन्द्रपदस्य रागिणं गुणेषु सहजसौजन्यवत्सलममलकाव्यरसतरंगाप्लवं प्रतानं कविपुङ्गवानामपश्यत्। तस्य चानेकगुणगभीराभोगमहनीयस्य मध्ये कविराजचक्रस्य विमलहेमसिंहासनोपविष्टमुपरिष्टाद्भास्वतः पर्यन्तलम्बिताविरलमणिगुच्छकावचूलवल्गुनो हरितचीनातपत्रस्य मूले विद्याधरमिव लीलया कल्पविटपिनस्तले निषण्णम्, क्षितिभृदुन्मूलनमहाबलं भुजद्वयमुदीक्षितुमिवायातमनिलमुन्मुञ्चता चामरेण सनाथकरतलाभिः पार्श्वयोश्चामरधारिनारीभिरुपवीज्यमानम्, क्षत्रियशौण्डीरमिन्द्रमिव व्यक्तद्विलोचनम्, उपेन्द्रमिव निह्नुतान्तरभुजाद्वयम्, हरमिव मुक्तव्रतम्, ब्रह्माणमिव क्षत्रियकुलेऽवतीर्णम्, अनङ्गमिव साङ्गम्, रविमिव भुजावस्थापितप्रतापम्, इन्दुमिवालापवाचि विसृतामृतम्, अखिलराजन्यचूडामणिं मुम्मुणिराजमद्राक्षीत्। यस्यातिविस्तृतानेकविषयवर्त्तिना गुणपथेन बभ्रमे सर्वतोऽपि पतिप्रलयभावनाविषण्णवैरितरुणीविसृष्टशिरःसिन्दूरधूलिभिरुद्धूलितपदो दास इति प्रसिद्धनामा स नाम वार्त्तिको जगति।

तेन हि प्रथितगुणपरंपरोपरञ्जिताशेषविश्वलोकेन राज्ञा दूरानन्दहसितया दृशा विलोक्य संभाष्य च परिचयोपचारमधुरेण वचसा संमानितः स कविर्लब्धोचितासनश्च सर्वैर्यथाक्रममालिङ्ग्याऽऽपृष्टकुशलः कविभिः। अत्रान्तरे

चानन्दकथाकर्णनरसोत्सुकेन भूभृता पुनस्तन्मु(स्वमु?)खेनैव स्फुटीकृतं(त्य?) वत्सराजनिवेदितं वृत्तमादिष्टः प्रबन्धपठनाय सर्वतोऽपि कविभ्यो गृहीतानुमतिरुन्मुच्य बन्धात्पुस्तकमादौ भारतीमवनम्य ततः पूर्वकवीननुध्यातवान् ।

वागीश्वरं हन्त र( भ )जेऽभिनन्द-
मर्थेश्वरं वाक्पतिराजमीडे ।
रसेश्वरं स्तौमि च कालिदासं
बाणं तु सर्वेश्वरमानतोऽस्मि ॥

इत्यभिप्रेतां कविचतुष्टयीमनुस्मृत्य वाचयितुमारब्धवान् । क्रमेण( कतिपयैः) दिवसैस्तं सर्वमपि श्रावयामास । वाचितप्रबन्धश्च परितुष्टेन रभसादुचितमात्मनो गुणानाम्, अनुरूपं च कविक्लेशस्य, सदृशं च कविताव्युत्पत्तिकौशलस्य, योग्यं च कथारसविभूतेः, यथावदतिमनोरथैर्वस्तुभिर्महता संमानडम्बरेण पूजितो राज्ञा सर्वैश्च तैः सभावर्त्तिभिः साधुकारितो लोकैरभिनन्दितः कविभिः(प्र)शंसितो विशिष्टैरालिङ्गितस्तु मित्रैराजगाम गृहम् । आगतश्च गृहमकृतदिव्यायतनादिकीर्त्तनमकिंचनस्य धनमजातपुत्रस्य सूनुरनाप्तकामिनीसंभोगस्य रतिसुखमनार्जितयशसो यशश्चेत्यादिभिश्चतुर्वर्गफलो निबन्ध इति तया प्रबन्धश्रिया ज्ञापितसंसारफल इव सफलीकृतमनुष्यजातिरिव दृष्टादृश्य इव लब्धालभ्य इव सिद्धासाध्य इव च त्रिभुवनाधिपत्यलाभाधिकां निर्वृतिमवाप ।

प्रबन्धस्य च प्रचारमुपरिष्टाच्चिन्तयन् विनयोपरचितकरसंपुटाञ्जलिरुवाच सर्वतः सर्वान्—

वृत्तेभ्यः किल किं भयं न च भयं तेभ्योऽपि ये सांप्रतं
वर्त्तन्ते कवयः प्रबन्धकरणक्लेशोपलब्धश्रमाः ।
अन्येभ्यश्चकितोऽस्मि वृत्तकवितामात्रेण भाङ्कारिणो
ये तेषामभितोऽप्यतत्त्वविदुषां शृङ्गे न पुच्छे ग्रहः ॥

ततश्च—

ये तावत्किल कृत्स्नवाङ्मयविदस्ते सन्तु दूरं बुधा
ओमित्यक्षरमात्रकेण विदुषामप्येष बद्धोऽञ्जलिः ।
कीदृश्यस्तु कथेयमत्रसकलैःसत्कृत्यकृ..................
................................................................ ॥
........................................................................ कश्चि-
दप्रार्थिता अपि परोपकृतौ रतास्ते ।

ते सर्वकालमियदेव परं भणामि

यावन्न कल्पशतमभ्युदय .......... ॥

...................................त्ति नन्दन्तु ते

ये कुर्वन्त्यजरामरान्नरपतीन्काव्येषु सूक्तामृतैः ।

तेऽपि क्ष्मापतयो जयन्ति जगतामारक्षिभिर्यैरसौ

भूर्भास्वद्भुजवज्रदण्डदलितानिष्टै( ष्टा )मानन्दति ॥

अपि जयति जगत्यामि( ष्ट )देवः पिनाकी

जयति स च पिनाकिन्युज्ज्वला यस्य भक्तिः ।

जयति जयति चासावत्र चम्पूकथायां

शिवनुतिपदपू( र्णा ) हन्त सारस्वतश्रीः ॥

॥ इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां सर्वानन्दो नाम सारस्वतश्रीपदाङ्कोऽष्टम-उच्छ्वासकः ॥

---

॥ समाप्तेयमुदयसुंदरीकथाचम्पूः ॥

॥ श्रीः ॥

# श्लोकानुक्रमणिका ॥

# Index of proper names occurring in the Udayasundarîkathâ.

# Index of Geographical names occurring in the Udayasundarîkathâ.

# शुद्धिपत्रम् ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ८ | स्सूत्रम् | स्छिद्रं (?) |
| २ | १८ | करटीन्दु | करटीन्द्र |
| ३ | २३ | तया | तयाऽद्य |
| ८ | २६ | वरूथिनी | वरूथिनीको |
| ८ | २९ | मुखा | सुखा |
| ९ | २१ | सुधासमु | समु |
| ,, | २२ | मधुरया | सुधामधुरया |
| १० | ९ | कर्तुं | कर्तुं |
| ,, | १३ | निवेशितेण | निवेशितेन |
| ११ | ९ | विलया | वलया |
| १८ | १६ | कवीन्द्रेष्ट्रे | कवीन्द्रेड्वि |
| २० | ११ | मिवतिष्ठ | मवतिष्ठ |
| २३ | ३ | काम | क्राम |
| २५ | ५ | जलता | ज्यालता |
| २८ | २८ | मत्यद्भत | मत्यद्भुत |
| ३४ | ४ | गतो | गमितो |
| ,, | २४ | एव । | एव |
| ,, | ,, | पीडा | पीडा । |
| ,, | २७ | द्वाःस्था | द्वाःस्थो |
| ,, | ,, | पति | पती |
| ,, | ३० | मेषा | सेवा |
| ३७ | १२ | मुन्निवे | सन्निवे |
| ३७ | २२ | नोदित | नोऽदति |
| ३८ | २१ | निवासः । | निवासः |
| ,, | ,, | पञ्जरके | पञ्जरके । |
| ३९ | ८ | शिरः | सरः |
| ३९ | १६ | भूमिरुल्लसिता | भूमिः, उल्लसता |
| ,, | १७ | वती शिरः | वतीशिरः |
| ,, | ,, | पांसुर्भूलता | पांसुः, लुठता |
| ,, | २२ | स्वयं | स्मयं |
| ४४ | १२ | मूर्द्धि | मूर्द्धि |
| ५९ | ११ | मण्डा | मण्ड |
| ६० | १४ | धन | घन |
| ६० | २० | शालाका | शलाका |

| पृ. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६५ | २८ | ऊर्ति | ऊर्तिं |
| ६६ | २४ | मिब | मिव |
| ७२ | ४ | मातुं– | मातु |
| ७६ | ८ | । | , |
| ८२ | २५ | दर्शाको | दशको |
| ९१ | ५ | रावतो | राघतो |
| ९७ | २० | बली | वली |
| १०० | ११ | शि | शि– |
| १०२ | २६ | मया; | मया |
| १०८ | २२ | शान्ति | शुक्ति |
| ,, | ,, | वृक्ष | ऋक्ष |
| १३७ | १४ | रूप | रूप– |
| ११४ | १८ | ( छां ? ) | |
| १२४ | १९ | इंपा | झम्पा |
| ,, | ,, | ( मनवष्टम्भमपतत् ? ) | |
| १४४ | ५ | ह्यव | हृय |
| १५१ | १४ | इचुलके | क्षुल्के |
| ,, | २८ | यौगि | गौगि |
| ,, | ,, | मा (सू ?) लुना | मातुलेन |
| १५४ | १८ | मासा | भासा |
| १५५ | २४ | भटः | भङ्गः |